# वास्तुपूजाप्रदीपः

सम्पादकः-अध्यापकः डा० प्रदीप्त कुमार नन्दः

विद्यावारिधिः , विद्वन्मणिः

संकल्पः- अमुकगोत्रोत्पनः अमुकनामाहं मम पृथिवीमातः ऋणमुपाकर्तुं तां प्रति स्वकर्तव्यस्मर्तुं मम धनधान्यादिसमृद्ध्यर्थं श्रीवास्तुदेवताप्रसन्नतासिद्ध्यर्थं नविनगृहनिर्माणहेतोः भूमिस्थितशल्याद्यष्टदोषनिवारणार्थं श्रीविश्वकर्मादिवतायाः वरप्रसन्नतार्थं नूतनगृहनिर्माणकार्यं निर्विघ्नतापूर्वकसिद्ध्यर्थं श्रीलक्ष्मीनारायणप्रसन्नताद्वारा चिरकालपर्यन्तं सुखपूर्वकवासार्थे पंचशिलास्थापनपुरःसरःभूमिपूजनं वास्तुपूजनं च करिष्ये । हस्तमात्रं वास्तुमण्डलं विलिख्य तत्र आग्नेयादितश्चतुरः शंकुन् संरोप्य तत्र माषोदनबलिं दद्यात् । ॐ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तान् समाश्रिताः । बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥१॥ ॐ अग्नये बलिं समर्पयामि । ॐ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां तान् समाश्रिताः । बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥२॥ ॐ नैर्ऋताय बलिं समर्पयामि । ॐ वायव्याधिपतिश्चैव वायव्यां ये च राक्षसाः । बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥३॥ ॐ वायवे बलिं समर्पयामि । ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तान् समाश्रिताः । बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥४॥ ॐ रुद्राय बलिं समर्पयामि । ततः एकाशीतिपदपक्षे प्रागग्राः उदङ्संस्थाः दशरेखाः उदग्ग्राः प्राक्संस्थाः च दशरेखाः कार्याः । तत्र रेखादेवान् पूजयेत् । १-ॐ शान्तायै नमः । २-ॐ यशोवत्यै

नमः । ३-ॐ कान्तायै नमः । ४-ॐ विशालायै नमः । ५- ॐ प्राणवाहिन्यै नमः । ६- ॐ सत्यै नमः । ७- ॐ सुमत्यै नमः । ८- ॐ नन्दायै नमः । ९-ॐ सुभद्रायै नमः । १०- ॐ सुरथायै नमः । ११- ॐ हिरण्यायै नमः । १२- ॐ सुव्रतायै नमः । १३- ॐ लक्ष्म्यै नमः । १४- ॐ विभूत्यै नमः । १५- ॐ विमलायै नमः । १६- ॐ प्रियायै नमः । १७- ॐ जयायै नमः । १८-ॐ ज्वालायै नमः । १९- ॐ विशोकायै नमः । २०-ॐ इडायै नमः । ॐ रेखादेवताभ्यो नमः । आवाहयामि । स्थापयामि । गन्धादिभिः पूजयेत् । ऐशान्यकोणादारभ्य वास्तुपूजा कार्या । १- ऐशान्यकोणे एकपदे रक्तवर्णे वास्तोः शिरसि शिखिनम् - समाह्वयन्तं शिखिनं महोज्वलं मेषाधिरूढं सुरराजवन्दितम् । त्रिशूलहस्तं वरदे महेशं भजामि देवं स्वकुलाभिवृद्ध्यै ॥ ॐ तमीशानं जगतस्थस्थुषस्पतिं धियन् जिन्वमवसे हुमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये । ॐ शिखिने नमः शिखिनमावाहयामि स्थापयामि । २-तद्दक्षिणे एकपदे पीतवर्णे दक्षिणनेत्रे पर्जन्यम्- ॐ एह्येहि जीमूतसुधाप्रमृष्टे चराचरैः सेवितधर्ममूर्त्ते । पवित्रदेवेश गृहाण पूजां ममाध्वरं पाहि भवन्नमस्ते ॥ ॐ शन्नो वातः पवतां शं नस्तपतु सूर्यः शं नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु । ॐ पर्जनाय नमः पर्जन्यमावाहयामि स्थापयामि । ३- तद्दक्षिणे द्विपदे पीतवर्णे दक्षिणश्रोत्रे जयन्तम्—ॐ एह्येहि देवेश जयन्तसूनो शच्याः सदा

सर्वसुरैकसेव्य । पीठेऽत्र यज्ञेश गृहाण पूजां शिवाय नः पाहि भवन्नमस्ते ॥ ॐ मर्माणि ते वर्मणा च्छादयामि सोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु । ॐ जयन्ताय नमः जयन्तमावाहयामि स्थापयामि । ४- तद्दक्षिणे द्विपदे पीतवर्णे दक्षिणांसे कुलिशायुधम्- एह्येहि वृतघ्न गजाधिरूढ सहस्रनेत्र त्रिदशैकराज । शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ आयात्विन्द्रो वस उपन इहस्तुतः सधमादस्तु शूरः । ववृधानः तविषीर्यस्य पूर्वीः द्यौर्न क्षत्रमभि भूति पुष्यात् । ॐ कुलिशायुधाय नमः कुलिशायुधमावाहयामि स्थापयामि । ५- तद्दक्षिणे द्विपदे रक्तवर्णे दक्षिणबाहौ सूर्यम् - समाह्वयन्तं द्विभुजं दिनेशं सप्ताश्ववाहं द्युमणिं ग्रहेशम् । सिन्दूरवर्णं प्रतिमावभासं भजामि सूर्यं स्वकुलाभिवृद्ध्यै ॥ ॐ बण्महां असि सूर्य वडादित्य महां असि । महस्ते सतो महिमा पनस्य तेद्धादेव महां असि । ॐ सूर्याय नमः सूर्यमावाहयामि स्थापयामि । ६-तद्दक्षिणे द्विपदे शुक्लवर्णे दक्षिणबाहौ सत्यम् - एह्येहि सत्येश महामहेश दुष्टान्तकृत्स्वच्छसुधर्ममूर्ते । पीठेऽत्र देवेश गृहाण पूजां ममाध्वरं पाहि भवन्नमस्ते ॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते । ॐ सत्याय नमः सत्यमावाहयामि स्थापयामि । ७- तद्दक्षिणे द्विपदे कृष्णवर्णे दक्षिणकूर्परे भृशम् - समाह्वयन्तं द्विभुजं भृशं हि नीलोत्पलाभासविशालनेत्रम् । नीलाद्रिवर्णं प्रतिमावभासं भजामि देवं कुलवृद्धिहेतोः ॥ ॐ आत्वाहार्षमन्तरभूद् ध्रुवस्तिष्ठाविचाचलिः

। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद् द्राष्ट्रमधिभ्रशत् । ॐ भृशाय नमः भृशमावाहयामि स्थापयामि । ८- तद्दक्षिणे एकपदे कृष्णवर्णे दक्षिणबाहौ आकाशम् - समाह्वयन्तं गगनं दिवौकसां निवासभूतं सुविनिर्मलं च । आरक्तहीनं रुचिरं पुराणं भजामि नाकं स्वकुलाभिवृद्धै ॥ ॐ यावंकशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षितम् । ॐ आकाशाय नमः आकाशमावाहयामि स्थापयामि । ९- तद्दक्षिणे एकपदे धूम्रवर्णे दक्षिणबाहौ वायुम् - धूम्राह्वयं गन्धवहं सुरम्यं मृगाधिरूढं त्रिदशैकवन्द्यम् । सुपूजकानन्दकरं पुराणं भजामि वायुं स्वकुलाभिवृद्ध्यै ॥ ॐ वायो ये ते सहस्त्रिणोरथासस्तेभिरागहि । नियुत्वान्सोमपीतये । ॐ वायवे नमः वायुमावाहयामि स्थापयामि । १०- तत्पश्चिमे एकपदे रक्तवर्णे दक्षिणमणिबन्धे पूषणम् - एह्येहि पूषन् सुविचारदक्ष हयाधिरूढाखिलधर्ममूर्ते । पीठेऽत्र देवेश गृहाण पूजां शिवाय नः पाहि भवन्नमस्ते ॥ ॐ पूषन् तव ब्रते वयं न रिष्येम कदा चन । स्तोतारस्त इहस्मसि । ॐ पूष्णे नमः पूषणमावाहयामि स्थापयामि । ११- तत्पश्चिमे द्विपदे शुक्लवर्णे दक्षिणपार्श्वे वितथम् - समाह्वयन्तं वितथं विशालं सुपूजकानन्दकरं वरेण्यम् । त्रिशूलहस्तं मकराधिरूढं भजामि देवं कमलायताक्षम् ॥ ॐ तत्सूर्यस्य देवत्वन्तन् महित्वं मद्ध्या कर्तोर्विततं संजभार । यदेदयुक्त हरितः सधस्था दादात्रीर्वासिस्तनुते सिमस्मै । ॐ वितथाय नमः वितथमावाहयामि स्थापयामि । १२- तत्पश्चिमे द्विपदे पीतवर्णे दक्षिणपार्श्वे गृहक्षतम् - एह्येहि लोकेश्वर दिव्यमूर्ते गृहक्षत त्वं कनकाद्रिरूपम् । पीठेऽत्र

देवेश गृहाण पूजां रक्षाध्वरं नो भगवन्नमस्ते ॥ ॐ अक्षन्नमीवदन्त ह्यव प्रिया अधूषत अस्तोषत स्वभा नवो विप्रान विष्ठया मती योजा निन्द्रते हरी । ॐ गृहक्षताय नमः गृहक्षतमावाहयामि स्थापयामि । १३- तत्पश्चिमे द्विपदे कृष्णवर्णे दक्षिणोरौ यमम् - एह्येहि दण्डायुध धर्मराज कालाञ्जनाभासविशालनेत्र । विशालवक्षःस्थलरौद्ररूपं गृहाण पूजां भगवन्नमस्ते ॥ ॐ यमाय त्वा अंगिरस्वते पितृमते स्वाहा । स्वाहा धर्माय स्वाहा धर्मपित्रे । ॐ यमाय नमः यममावाहयामि स्थापयामि । १४- तत्पश्चिमे द्विपदे रक्तवर्णे दक्षिणजानौ गन्धर्वम् - एह्येहि गन्धर्व सुरप्रियेश रक्तौत्पलाभाससुधात्ममूर्ते । पीठेऽत्र देवेश गृहाण पूजां ममाध्वरं पाहि भवन्नमस्ते ॥ ॐ गन्धर्वस्त्वाविश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्याग्निरिड ईडितः । इन्द्रस्य बाहुरसिदक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । मित्रावरुणौ त्वत्तरतः परिधत्तान् ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । ॐ गन्धर्वाय नमः गन्धर्वमावाहयामि स्थापयामि । १५- तत्पश्चिमे द्विपदे कृष्णवर्णे दक्षिणजंघायां भृंगराजम् - समाह्वयन्तं शिखिपृष्ठसंस्थं श्रीभृंगराजं जगतः शरण्यम् । खट्वांगहस्तं वरदं जनेशं यजामि देवं स्वकुलाभिवृद्ध्यै ॥ ॐ सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् । ॐ भृंगराजाय नमः भृंगराजमावाहयामि स्थापयामि । १६- तत्पश्चिमे

एकपदे पीतवर्णे दक्षिणनितम्बे मृगम् - एह्येहि गोरोचनदिव्यमूर्ते मृगप्रकृष्टार्तिहरासुरारे । पीठेऽत्र देवेश गृहाण पूजां ममाध्वरं पाहि भवन्नमस्ते ॥ ॐ मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः । सृकं सं शाय पविमिन्द्रतिग्मं विशत्रून् ताढि विमृधो नुदस्व । ॐ मृगाय नमः मृगमावाहयामि स्थापयामि । १७- तत्पश्चिमे एकपदे रक्तवर्णे पादयोः पितॄन् - समाह्वयान् दिव्यपितॄन् कुलेशान् रक्तोत्पलाभानिह रक्तनेत्रान् । सुरक्तमाल्याम्बरभूषितांश्च नमामि पीठे कुलवृद्धिहेतोः ॥ ॐ उशन्तस्त्वा निधीमहि उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्  हविषे अत्तवे । ॐ पितृभ्यो नमः पितॄनावाहयामि स्थापयामि । १८-तदुत्तरे एकपदे रक्तवर्णे वामनितम्बे दौवारिकम् – एह्येहि दौवारिक दण्डपाणे विशालपंकेरुहलोचनेश । पीठेऽत्र देवेश गृहाण पूजां शिवाय नः पाहि भवन्नमस्ते ॥ ॐ  द्वे विरूपे चरतः स्वर्थे अन्त्यान्या वत्समुपधापयेते । हरिरन्यस्यां भवति स्वधावान् शुक्रो अन्यस्यां ददृशे सुवर्चाः । ॐ दौवारिकाय नमः दौवारिकमावाहयामि स्थापयामि । १९- तदुत्तरे द्विपदे शुक्लवर्णे वामजंघायां सुग्रीवम्- एह्येहि सुग्रीव सुरेशपूज्य दशाश्ववाह त्रिगुणात्ममूर्ते । पीठेऽत्र देवेश गृहाण पूजां मनोरमां त्वं भगवन्नमस्ते ॥ ॐ नीलग्रीवाः शितिकंठा दिवं रुद्रा उपश्रिताः । तेषांगु सहस्रयोजनेऽवधन्वानि तन्मसि । ॐ सुग्रीवाय नमः सुग्रीवमावाहयामि स्थापयामि । २०- तदुत्तरे द्विपदे रक्तवर्णे वामजानौ पुष्पदन्तम्- एह्येहि विघ्नाधिपते सुरेन्द्र

ब्रह्मादिदेवैरभिवन्द्यपाद । देवेश विद्यालय पुष्पदन्त गृहाण पूजां भगवन्नमस्ते ॥ ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः । ॐ पुष्पदन्ताय नमः पुष्पदन्तमावाहयामि स्थापयामि । २१- तदुत्तरे द्विपदे शुक्लवर्णे वामोरौ वरुणम्- एह्येहि लोकेश्वर पाशपाणे यादोगणैर्वन्दितपादपद्म । पीठेऽत्र देवेश गृहाण पूजां पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके । ॐ वरुणाय नमः वरुणमावाहयामि स्थापयामि । २२- तदुत्तरे द्विपदे पीतवर्णे वामपार्श्वे असुरम्- एह्येहि देवेश जगत्प्रताप महीग्ररूपासुरविश्वमूर्ते । महाबलः खड्गगदास्त्रपाणे पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनो दिन्दियाय । इमन्तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि । ॐ असुराय नमः असुरमावाहयामि स्थापयामि । २३- तदुत्तरे द्विपदे कृष्णवर्णे वामपार्श्वे शोषम्- एह्येहि कीला वलिलीढ विश्वयज्ञेऽत्रदेवर्षभसंघसेव्य । गृहाण पूजां विधिना प्रदत्तां शोषे सुदक्षाय नमोऽस्तु शोष ॥ ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये शं योरभिस्रवन्तु नः । ॐ शोषाय नमः शोषमावाहयामि स्थापयामि । २४-तदुत्तरे एकपदे पीतवर्णे वाममणिबन्धे पापम्- एह्येहि पापेन सदा विजेन देवासुराणां सचराचराणाम् । मां पाहि नित्यं सकलत्र पुत्रं गृहाण पूजां भगवन्नमस्ते ॥ ॐ एतत्ते रुद्राऽवसन्तेन परो मूजवतोऽतीहि ।

अवततधन्वा पिनाकावसः कृतिवासा अहिं सन्नः शिवोतीहि । ॐ पापाय नमः पापमावाहयामि स्थापयामि । २५-तदुत्तरे एकपदे रक्तवर्णे वामबाहौ रोगम्- एह्येहि रोगाधिपतेऽमरेश नानाविधैश्वर्यहयादियुक्त । ब्रह्मादिदेवैरभिवन्दनीय गृहाण पूजां भगवन्नमस्ते ॥ ॐ द्रापे अन्धसस्पते दरिद्र नीललोहित । आसां प्रजानां मेषां पशूनां माभेर्मारोङ्मोचनः किंचनाममत् । ॐ रोगाय नमः रोगमावाहयामि स्थापयामि । २६- तत्पूर्वे एकपदे रक्तवर्णे वामबाहौ अहिम्- समाह्वयन्तं फणिराजमग्न्यं नानाफणामण्डलराजमानम् । भक्तैकगम्यं जनताशरण्यं यजाम्यहं नः स्वकुलाभिवृद्ध्यै ॥ ॐ अहिरिव भोगैः पर्य्येति बाहुन् जायाहेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमां सम्परिपातु विश्वतः । ॐ अहये नमः अहिमावाहयामि स्थापयामि । २७- तत्पूर्वे द्विपदे रक्तवर्णे वामबाहौ मुख्यम्- आवाहयेऽहं सुरदेवसेवितं जीमूतसंकाशमुमाधिनाथम् । मुख्याभिध देवमिहार्थताद्यैः पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे । निशीर्यशल्यानां मुखा शिवो नः सुमना भव । ॐ मुख्याय नमः मुख्यमावाहयामि स्थापयामि । २८- तत्पूर्वे द्विपदे कृष्णवर्णे वामप्रबाहौ भल्लाटम्- एह्येहि भल्लाटशशांकमूर्ते सुरासुरैरर्चितपादपद्म । देदीप्यमानोप्सरसां गणेन गृहाण पूजां भगवन्नमस्ते ॥ ॐ इमा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा शमसद्विपदे चतुष्पदे विश्वं पृष्टं ग्रामे अस्मिन्ननातुरम् ।

ॐ भल्लाटाय नमः भल्लाटमावाहयामि स्थापयामि । २९- तत्पूर्वे द्विपदे शुक्लवर्णे वामप्रबाहौ सोमम्- एह्येहि ताराधिपते सुरेश श्वेतोत्पलाभाससुधाकरेश । पीठेऽत्र देवेश गृहाण पूजां पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ सोमं राजानमवसेऽग्निमन्वारभामहे । आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् । ॐ सोमाय नमः सोममावाहयामि स्थापयामि । ३०- तत्पूर्वे द्विपदे कृष्णवर्णे वामांसे सर्पम्- आगच्छतागच्छत सर्पदेवाः संसारभीतिप्रमुखा वरेण्याः । धराधरा रत्नविभूषिताश्च गृह्णीत पूजां वरदा नमो वः ॥ ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । ॐ सर्पेभ्यो नमः सर्पानावाहयामि स्थापयामि । ३१- तत्पूर्वे द्विपदे पीतवर्णे वामश्रोत्रे अदितिम्- एह्येहि मातरदिते शुभप्रदे यज्ञाधिपे सर्वजगत्प्रिये शुभे । सुरप्रिये नो भव विश्वधात्रि यजामि देवीं प्रकृतिं पुराणीम् ॥ ॐ इड एह्यदित एहि काम्या एत । मयि वः कामधरणं भूयात् । ॐ अदित्यै नमः अदितिमावाहयामि स्थापयामि । ३२- तत्पूर्वे एकपदे पीतवर्णे वामनेत्रे दितिम्- एह्येहि देवि त्वमिहात्र यज्ञे प्रसीद मातर्दनुजान्वयस्थे । दिते महामोहकरी त्वमस्मान् पाहीन्द्रवन्द्ये प्रणता वयं ते ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् । ॐ दित्यै नमः दितिमावाहयामि स्थापयामि । ३३- ततः मध्यमपदेषु ईशानपदोत्तरे एकपदे शुक्लवर्णे मुखे अपः- समाह्वयाः

श्वेतसुपावनेशीरापस्वरूपाः प्रबलप्रपन्नाः । सुपाशहस्ता वरदा अपोऽत्र यजामि देवीः कुलवृद्धिः हेतोः ॥ ॐ अप्स्वग्ने सधिष्ठव सौषधीरनु रुध्यसे । गर्भे संजायसे पुनः । ॐ अद्भ्यो नमः अप आवाहयामि स्थापयामि । ३४- आग्नेयपदोत्तरे एकपदे शुक्लवर्णे दक्षिणहस्ते सावित्रम्- समाह्वयं दिव्यमुदारकीर्तिं कलाकलाभिस्तु महोग्ररूपम् । सावित्रमग्र्यं सुविशालमूर्तिं यजामि देवं स्वकुलाभिवृद्ध्यै ॥ ॐ हस्त आधाय सविता विभ्रदभ्रिं हिरण्मयीम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अद्ध्या भरदानुष्टुभेन छन्दसांगिरस्वम् । ॐ सावित्राय नमः सावित्रमावाहयामि स्थापयामि । ३५- नैर्ऋत्यपदोत्तरे एकपदे शुक्लवर्णे मेढ्रे जयम्- एह्येहि सर्वायुधशोभमान सुरासुराणां जयकृन्महोग्र । जयाभिधत्वं भव नो जयाय नानाविधालंकृतिमन्नमस्ते ॥ ॐ अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजां सुक्षितिं सुश्रवसन् जयन्तन्त्वामनुमदेम सोम । ॐ जयाय नमः जयमावाहयामि स्थापयामि । ३६- वायव्यपदोत्तरे एकपदे रक्तवर्णे रुद्रम्- एह्येहि सर्वज्ञ पिनाकपाणे सुरासुरैर्वन्दितपादपद्म । पीठेऽत्र देवेश गृहाण पूजां रक्षाध्वरं नो भगवन्नमस्ते ॥ ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः । बाहुभ्यामुत ते नमः । ॐ रुद्राय नमः रुद्रमावाहयामि स्थापयामि । ३७- पूर्वपदत्रये कृष्णवर्णे दक्षिणस्तने अर्यमणम्- आवाहये अर्यमणं महेशं सुरासुरैरर्चितपादपद्मम् । नीलाम्बुजाभासमयेशदेवं गृहाण पूजां भगवन्नमस्ते ॥ ॐ यदद्य सूर उदिते नागा मित्रो अर्यमा । सुवाति सविता भगः । ॐ अर्यम्णे नमः

अर्यमणमावाहयामि स्थापयामि । ३८- आग्नेये एकपदे रक्तवर्णे दक्षिणहस्ते सवितारम्- एह्येहि पीठे सवितर्दिनेश सप्ताश्वसंयुक्तरथाधिरूढ । रक्तोत्पलाभासविशालनेत्र गृहाण पूजां भगवन्नमस्ते ॥ ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव । ॐ सवित्रे नमः सवितारमावाहयामि स्थापयामि । ३९- तत् पश्चिमे पदत्रये शुक्लवर्णे जठरे विवस्वन्तम्- एह्येहि रक्ताम्बर रक्तदेह सुरासुरैराधितपादपद्म । आरोग्यदातः पुरुषपुराण विवस्वते तुभ्यमहं नमामि ॥ ॐ विवस्वन् आदित्यैष तेसोमपीथस्तस्मिन् नमत्स्व । श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे । ॐ विवस्वते नमः विवस्वन्तमावाहयामि स्थापयामि । ४०- नैर्ऋत्ये एकपदे रक्तवर्णे लिंगे विबुधाधिपम्- आवाहयेऽहं विबुधाधिपं तं श्वेताम्बरं नीलविशालदेहम् । गजाधिरूढं सकलार्तिदोहं गृहाण पूजां भगवन्नमस्ते ॥ ॐ सबोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्यस्मद् द्वेषांसि विश्वकर्मणे स्वाहा । ॐ विबुधाधिपाय नमः विबुधाधिपमावाहयामि स्थापयामि । ४१- उत्तरे पदत्रये शुक्लवर्णे जठरे मित्रम्- एह्येहि रक्ताम्बरधारिमित्र सप्ताश्ववाह त्रिदशैकनाथ । श्वेतोत्पलाभास विशालनेत्र गृहाण पूजां भगवन्नमस्ते ॥ ॐ मित्रस्य चर्षणीधृतोवो देवस्य सानसि । द्युम्नश्चित्रश्रवस्तमम् । ॐ मित्राय नमः मित्रमावाहयामि स्थापयामि । ४२- वायव्ये एकपदे रक्तवर्णे वामहस्ते राजयक्ष्माणम्- एह्येहि सर्वायुधशोभमान श्रीराजयक्ष्मन् त्रिगुणात्ममूर्ते । पीठेऽत्र देवेश

गृहाण पूजां देवाधिदेवेश भवन्नमस्ते ॥ ॐ नाशयित्री बलासस्यार्शस उपचितामसि । अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी । ॐ राजयक्ष्मणे नमः राजयक्ष्माणमावाहयामि स्थापयामि । ४३- तत्प्राक्पदत्रये रक्तवर्णे स्तनौ पृथ्वीधरम्- एह्येहि पृथ्वीधरशाङ्र्गपाणे उदारकीर्ते सुविशालमूर्ते । चतुर्भुजत्वमिह पूजयामि वरिष्ठदेवं स्वकुलाभिवृद्ध्यै ॥ ॐ स्योना पृथिवी नो भवान्नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः । ॐ पृथ्वीधराय नमः पृथ्वीधरमावाहयामि स्थापयामि । ४४- तत्पाक् ईशाने एकपदे शुक्लवर्णे उरसि आपवत्सम्- एह्येहि यज्ञेश्वर आपवत्स महाबलस्त्वं प्रथितः सुरेश । मयूरवाह त्रिदशैकवन्द्य गृहाण पूजां भगवन्नमस्ते ॥ ॐ आते वत्सो मनो यमत्परमाचित्सधस्थात् । अग्ने त्वां कामयागिरा । ॐ आपवत्साय नमः आपवत्समावाहयामि स्थापयामि । ४५- मध्ये नवपदे पीतवर्णे वास्तोः हृदये ब्रह्माणम्- एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ त्रिदशैकवन्द्य । श्वेतोत्पलाभास कुशाब्जहस्त गृहाण पूजां भगवन्नमस्ते ॥ ॐ ब्रह्म यज्ञानं प्रथमं परस्तात् द्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः । ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि । ४६- ततो मण्डलाद् बहिः ईशान्यां धूम्रवर्णे चरकीम्- आवाहये तां चरकीं सुकृष्णां शंखं च पाशांकुशधारितांगीम् । भीमां प्रचण्डां गृहसौख्यदात्रीं गृहाण पूजां वरदे नमस्ते ॥ ॐ यन्ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् । तं ते विष्याम्यायुषो न मध्यादथैन पितुमद्धि

प्रसूतः नमो भूत्यै येदं चकार । ॐ चरक्यै नमः चरकीमावाहयामि स्थापयामि । ४७- आग्नेय्यां रक्तवर्णे विदारीम्- आवाहये तां नखलोमयुक्तां मार्जाररूपाननसंदधात्रीम् । घोराट्टहासैः खलु गर्जयन्तीं देवीं विदारीं शरणं प्रपद्ये ॥ ॐ अक्षराजाय कितवं कृतायादिनदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृतन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्य पाप्मने शैलगम् । ॐ विदार्य्यै नमः विदारीमावाहयामि स्थापयामि । ४८- नैर्ऋत्यां नीलवर्णे पूतनाम्- एह्येहि दैत्येऽसुरसंघयुक्ते सुपूतने मे मखकर्मणि त्वम् । पाहि त्वमस्मान् सततं शिवाय गृहाण मेऽर्चां वरदे नमस्ते ॥ ॐ इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवोऽदित्यै भसज्जीमूतान् हृदयौपशेनान्तरिक्षं पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिव वृकाभ्यां गिरीन् प्लाशिभिरुपलान् प्लीन्हा वल्मीकान् क्लोमभिः ग्लोभिः गुल्मान्  हिराभिः स्रवन्ती हृदान् कुक्षिभ्यां समुद्रमुदरेण वैश्वानरं भस्मना । ॐ पूतनायै नमः पूतनामावाहयामि स्थापयामि । ४९- वायव्यां कृष्णवर्णे पापराक्षसीम्- आवाहये त्वामघरोगयुक्तां पापातिपापेन सदा प्रयुक्ताम् । रक्ताननां शस्त्रधरां त्रिनेत्रां गृहाण पूजां शुभदे नमस्ते ॥ ॐ यस्यास्ते घोर आसन् जुहोम्येषां बन्धानामवसर्जनाय । यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः । ॐ पापराक्षस्यै नमः पापराक्षसीमावाहयामि स्थापयामि । ५०- ततः पूर्वे रक्तवर्णे स्कन्दम्- एह्येहि देवेश षडानन त्वं कपर्दितेजोद्भववारिजाक्ष ।

मयूरवाहो जितकामदेवो गृहाण पूजां भगवन्नमस्ते ॥ ॐ यदक्रन्दः प्रथमं जायमान उद्यन्तन्समुद्रा दुतवा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू पपस्त्यत्यं महिजातं ते अर्वन् । ॐ स्कन्दाय नमः स्कन्दमावाहयामि स्थापयामि । ५१- दक्षिणे कृष्णवर्णे अर्यमणम्- आवाहये अर्यमणं महेशं सुरासुरैरर्चितपादपद्मम् । नीलाम्बुभासं महनीयमूर्तिं गृहाण पूजां भगवन्नमस्ते ॥ ॐ यदद्य सूरऽउदिते नागा मित्रोऽअर्यमा सुवाति सविता भगः । ॐ अर्यम्णे नमः अर्यमणमावाहयामि स्थापयामि । ५२- पश्चिमे रक्तवर्णे जृम्भकम्- आवाहये त्वां प्रहरं च मुख्यं जृम्भायमानं वरखड्गहस्तम् । प्रत्यग्दिशायां च सुरक्षणीयमत्राधिवासं कुरु जृम्भक त्वम् ॥ ॐ हिंकाराय स्वाहा हिंकृताय स्वाहा क्रन्दते स्वाहा अवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रपोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहा पविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा संहानाय स्वाहा उपस्थिताय स्वाहा यनाय स्वाहा प्रायणाय स्वाहा । ॐ जृम्भकाय नमः जृम्भकमावाहयामि स्थापयामि । ५३- उत्तरे पीतवर्णे पिलिपिच्छम्- आवाहये तं पिलिपिच्छकं च मयूरपिच्छानि विधारयन्तम् । वामे तु हस्ते धनुरादधानं बाणं दधानं त्वितरे तु हस्ते ॥ ॐ कास्विदासीत्पूर्वचित्तिः किंस्विदासीत् बृहद्वयः । कास्विदासीत् पिलिप्पिला कास्विदासीत् पिशंगिला । ॐ पिलिपिच्छाय नमः पिलिपिच्छमावाहयामि स्थापयामि । ५४-

ततः पूर्वे पीतवर्णे इन्द्रम्- एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संबीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ ॐ त्रात्रारमिन्द्रमवितारमिन्द्रंगु हवे हवेसु हवंगु शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहुतमिन्द्रंगु स्वस्ति नो मघवा धात्विन्द्रः । ॐ इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि । ५५-

आग्नेये रक्तवर्णे अग्निम्- एह्येहि सर्वामरहव्यवाह मुनिप्रवर्य्यैरभितोभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते ॥ ॐ अग्निदूतं पुरो दधे हव्यवाहमुप ब्रुवे देवाँ२ आ सादयादिह । ॐ अग्नये नमः अग्निमावाहयामि स्थापयामि । ५६-

याम्ये कृष्णवर्णे यमम्- एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते । शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते ॥ ॐ यमेन दत्तं त्रितयेनमायुनगिन्द्र एणं प्रथमोऽध्यतिष्ठत् गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतिष्ठ । ॐ यमाय नमः यममावाहयामि स्थापयामि । ५७- नैर्ऋते नीलवर्णे नैर्ऋतम्- एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः । ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ ॐ एषते निर्ऋते भागस्तं जुषस्व स्वाहा अग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो वा मरुन्नेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यः उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यः उपरिसद्भ्योदुवस्वद्भ्यः स्वाहा । ॐ नैर्ऋताय नमः नैर्ऋतमावाहयामि स्थापयामि । ५८- पश्चिमे श्वेतवर्णे वरुणम्-

एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युरा चके । ॐ वरुणाय नमः वरुणमावाहयामि स्थापयामि । ५९-वायव्ये धूम्रवर्णे वायुम्- एह्येहि यज्ञेश समीरण त्वं मृगाधिरूढः सह सिद्धसंघैः । प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐ आनो नियुद्भिः शतिनीभिरध्वरं सहस्त्रिणीभिरुपयाहि यज्ञम् । वायो अस्मिन् सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः । ॐ वायवे नमः वायुमावाहयामि स्थापयामि । ६०- उत्तरे सुक्लवर्णे कुवेरम्- एह्येहि यक्षेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ ॐ वयं सोमव्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि । ॐ कुवेराय नमः कुवेरमावाहयामि स्थापयामि । ६१- ऐशान्यां श्वेतवर्णे ईशानम्- एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगधरेण सार्द्धम् । लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये । ॐ ईशानाय नमः ईशानमावाहयामि स्थापयामि । ६२- ईशानेन्द्रयोर्मध्ये श्वेतवर्णे ब्रह्माणम्- एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः । सर्वस्य धाताऽस्यमितप्रभावो विशाध्वरं नः सततं शिवाय ॥ ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् । ॐ ब्रह्मणे नमः

ब्रह्माणमावाहयामि स्थापयामि । ६३- निर्ऋतिवरुणयोर्मध्ये कृष्णवर्णे अनन्तम्- एह्येहि पातालधरामरेन्द्र नागांगनाकिन्नरगीयमान । यक्षोरगेन्द्रामरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम् ॥ ॐ स्योना पृथिवि नो भवान्नृक्षरानिवेशनि । यच्छा नः शर्म सप्रथाः । ॐ अनन्ताय नमः अनन्तमावाहयामि स्थापयामि । ६४- ततः अष्टनागेषु पूर्वे अनन्तनागम्- एह्येहि नागेन्द्र विशालदेह पातालवासिन् घननीलवर्ण । अनन्तदेवेश महोरग त्वं गृहाण पूजां भगवन्नमस्ते ॥ ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । ॐ अनन्तनागाय नम अनन्तनागमावाहयामि स्थापयामि । ६५-आग्नेय्यां वासुकिम्- आवाहये वासुकिकालसर्पं भूतेशकंठावृतभीमरूपम् । काकोलधारिन् वसुधाधर त्वं गृहाण पूजां भगवन्नमस्ते ॥ ॐ ये वाभि रोचने दिवो ये वा सूर्यस्य रश्मिषु येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः । ॐ वासुकिनागाय नमः वासुकिनागमावाहयामि स्थापयामि । ६६- दक्षिणे तक्षकम्- आवाहये तक्षकनागराजं महोग्ररूपं तमसा प्रविष्टम् । फणाधरं व्यालकुलाग्रगण्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ या इषवो यातुधानानां ये वा वनस्पतिंगुरनु ये वा वटेषु शेरते तेभ्यः सर्पेभ्यो नमः । ॐ तक्षकनागाय नमः तक्षकनागमावाहयामि स्थापयामि । ६७- नैर्ऋत्यां कर्कोटकम्- एह्येहि कर्कोटकनागराज मार्त्तण्डरूपिन् जलजायमान । हलाहलैः पूरितदिव्यदेह गृहाण पूजां भगवन्नमस्ते ॥ ॐ मलये चैव ये सर्पाः कर्कोटकाः प्रमुखादयः । नमोऽस्तु तेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा । ॐ कर्कोटकनागाय

नमः कर्कोटकनागमावाहयामि स्थापयामि । ६८- पश्चिमे शंखम्- एह्येहि शंखोरगनायक त्वं रत्नाकरे संस्थितशंखरूप । फुत्कारशब्दायित भीषणास्य गृहाण पूजां भगवन्नमस्ते ॥ ॐ काद्रवेयाश्च ये सर्पाः मातृभक्तिपरायणाः । नमोऽस्तु तेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा । ॐ शंखनागाय नमः शंखनागमावाहयामि स्थापयामि । ६९-वायव्यां कुलिकम्- आवाहये तं कुलिकं विशालं कृष्णाम्बुगात्रं जलजायमानम् । पातालसंस्थं सुविशालदेहं गृहाण पूजां भगवन्नमस्ते ॥ ॐ इदं सर्पेभ्यो हविरस्तु जुष्टमाश्रेषा येषामनुयन्ति चेतः । ये अन्तरिक्षं पृथिवीं क्षियन्ति ते नः सर्पासो हव मागमिष्ठाः । ॐ कुलिकनागाय नमः कुलिकनागमावाहयामि स्थापयामि । ७०- उत्तरे पद्मम्- एह्येहि पद्मोरगनायक त्वं पद्माकृतिं धारिततीव्रगन्ध । महोत्कटक्ष्वेडधर प्रकाण्ड गृहाण पूजां भगवन्नमस्ते ॥ ॐ ये रोचने सूर्यस्यापि सर्पाः ये दिवं देवीमनु संचरन्ति येषामाश्रेषा अनुयन्ति कामं तेभ्यः सर्पेभ्यो मधुमत्जुहोमि । ॐ पद्मनागाय नम पद्मनागमावाहयामि स्थापयामि । ७१- ऐशान्यां महापद्मम्- ध्याये महापद्ममहिं प्रफुल्लं विलेशयं जांगलधारितांगम् । सौगन्धयुक्तं कमनीयरूपं गृहाण पूजां भगवन्नमस्ते ॥ ॐ ब्रह्मलोकेषु ये सर्पाः शेषनागपुरोगमाः । नमोऽस्तु तेभ्यः सर्पेभ्यः सुप्रीताः मम सर्वदा । ॐ महापद्मनागाय नमः महापद्मनागमावाहयामि स्थापयामि । ७२-ततः भूमौ नव योगिनीषु पूर्वे दुर्जयाम्- एह्येहि विश्वेश्वरि दुर्जये त्वं दुःखच्छिदे दुर्गतिदैन्यहारि । शैवालिसंघावृतघोरयोग्नि गृहाण पूजां वरदे

नमस्ते ॥ ॐ आपश्यति प्रतिपश्यति परापश्यति पश्यति । दिवमन्तरिक्षमाद् भूमिं सर्वं तत् देवी पश्यति । ॐ दुर्जयायै नमः दुर्जयामावहयामि स्थापयामि । ७३- आग्नेय्यां विकटाम्- आवाहये तां विकटां वरिष्ठां घूर्णायिताक्षीं सबलां सरौद्रीम् । यज्ञस्य रक्षां कुरु देवदेवि गृहाण पूजां शुभदे नमस्ते ॥ ॐ दिव्यस्य सुपर्णस्य तस्य हासि कनीनिका । सा भूमि मा रुहोहिथ वह्यम् श्रान्ता वधूरिव । ॐ विकटायै नमः विकटामावाहयामि स्थापयामि । ७४-दक्षिणे घोराम्- एह्येहि घोरे घनघोरकत्रि वीरांगने कांचनधारितांगि । वास्तौ मदीये सहसा प्रविश्य गृहाण पूजां सुखदे नमस्ते ॥ ॐ कश्यपस्य चक्षुरसि शून्याश्च चतुरक्ष्याः । वीध्रे सूर्यमिव सर्पन्तं मा पिशाच तिरस्करः । ॐ घोरायै नमः घोरामावाहयामि स्थापयामि । ७५-नैर्ऋत्यां भीषणाम्- आवाहये तां नरयानसंस्थां श्रीभीषणां भीषणरौद्रमूर्तिम् । चतुर्भुजां मानवभस्मलिप्तां गृहाण पूजां धनदे नमस्ते ॥ ॐ अग्ने पृतनाषाट् पृतना सहस्वा पुनः कृत्यां कृत्याकृत्य प्रतिहरणेन हरामसि । ॐ भीषणायै नमः भीषणामावाहयामि स्थापयामि । ७६- पश्चिमे भयानकीम्- आवाहये कालियसर्पयुक्तां भयानकीं भीमपराक्रमां ताम् । शीतांशुशुभ्रां नवयौवनाभां गृहाण पूजां सुखदे नमस्ते ॥ ॐ अष्तापदी चतुरक्षी चतुःश्रोत्रा चतुर्हनुः हास्या द्विजिह्वा भूत्वा सा राष्ट्रमव धूनुते ब्रह्मज्यस्य । ॐ भयानक्यै नमः भयानकीमावाहयामि स्थापयामि । ७७-वायव्यां यमदंष्ट्राम्-एह्येहि कालानलभैरवी त्वं श्रीकालदंष्ट्रे कुलपालयन्ती । धूम्रे प्रदेहि प्रणमामि सौख्यं गृहाण पूजां सुखदे नमस्ते ॥ ॐ देवाः

कपोत इपितो यदिच्छन् दूतो निर्ऋत्या इदमागगाम । तस्या अर्च्चाम पृणवाम  निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे । ॐ यमदंष्ट्रायै नमः यमदंष्ट्रामावाहयामि स्थापयामि । ७८- कौवेर्य्यां कालजिह्वाम्- एह्येहि गौरांगिनि कालजिह्वे करालचक्रायुधधारिते त्वम् । नृमुण्डमाले वरदानहस्ते गृहाण पूजां सुखदे नमस्ते ॥ ॐ यत्तेदेवी निर्ऋतिरावबन्ध दाम ग्रीवास्वविमोक्यं  यत् तत्ते विष्याम्यायुषे वर्च्चसे बलायादोमदमन्नमभि प्रसूत । ॐ कालजिह्वायै नमः कालजिह्वामावाहयामि स्थापयामि । ७९- ऐशान्यां क्रोशिनीम्- आवाहये मार्गसहायिकां तां श्रीक्रोशिनीं क्रोशचरीं सुकेशीम् । समार्जनीं कण्टकदारयन्तीं गृहाण पूजां वरदे नमस्ते ॥ ॐ भूते हविष्मती उवैष ते भागो यो अस्मासु मुञ्चेमानमुनेनसः स्वाहा । ॐ क्रोशिन्यै नमः क्रोशिनीमावाहयामि स्थापयामि । ८०- ऊर्ध्वे ताडिनीम्- समाह्वये पंकजसन्निविष्टां श्रीताडिनीं दण्डकरां वरिष्ठाम् । दिग्वस्त्रयुक्तां मधुपानमत्तां गृहाण पूजां  वरदे नमस्ते । ॐ अम्बे अम्बिके अम्बालिके न मा नयति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पिल्यवासिनीम् । ॐ ताडिन्यै नमः ताडिनीमावाहयामि स्थापयामि । ८१-अधो वास्तुपुरुषम्- एह्येहि पातालतलाधिवासिन् वास्तोष्पते स्वच्छ सुधर्ममूर्ते । गृहाधिदेवेश परेश निन्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशोऽ अनमीवो भवानः । यस्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे । ॐ वास्तोष्पतये नमः वास्तोष्पतिमावाहयामि स्थापयामि । ततः वास्तुमण्डलमध्ये

ताम्रकलशमाजिघ्रेति मन्त्रेण संस्थाप्य वरुणस्येति मन्त्रेण जलं प्रपूर्य या फलिनीति मन्त्रेण नारिकेलं दत्त्वा परिधास्येति मन्त्रेण वस्त्रं दत्त्वा सिन्धोरिवेति मन्त्रेण सिन्दूरं गन्धद्वारेति मन्त्रेण गन्धं श्रीश्चतेति मन्त्रेण पुष्पं काण्डात् काण्डादेति दूर्वां अक्षन्नमिवदन्तेति अक्षतान् च दत्वा स्थिरोभवेति मन्त्रेण स्थिरीकरणं विधाय ॐ सर्वतीर्थोद्भववारि सर्वदेवसमन्वितम् । इमं घटं समारुह्य तिष्ठ देवगणैः सह ॥ इत्यावाह्य कलशोपरि सुवर्णमयं रजतमयं वा सर्पाकारां कृकल्लासकारां वा वास्तुप्रतिमां संस्थाप्य मूर्त्तांविघातादिदोषपरिहारार्थं तां प्रतिमां क्षीरेण पञ्चामृतेन वा अग्न्युत्तारणसूक्तेन स्नापयेत्- ॐ समुद्रस्य त्वा वकयाग्ने परिवयामसि पावकोऽअस्मभ्यंगु शिवो भव । हिमस्यत्वा जरायुणाग्ने परिवयामसि पावकोऽअस्मभ्यंगु शिवो भव । उपजमन्न्यु न्नववेतसेऽवतरं नदीष्वा अग्नेपित्तमपामसि मण्डूकाताभिरागहि सेमन्नो यज्ञं पावकवर्णंगुशिवं कृधि । अपामिदन्नयनंगुसमुद्रस्य निवेशनम् अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यंगु शिवो भव । अग्ने पावक रोचिषामन्द्रया देवजिह्वया आदेवान् न्वक्षि यक्षि च । सनः पावक दीविवोऽग्ने देवां इहावह उपयज्ञंगु हविश्चनः । पावकया यश्चितयन्त्याकृपाक्षोमन् रुसरुच उषसो न भानुना पूर्वन्नयामन्नेतशस्य नूरण आयो घृणे न ततृषाणो अजरः । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्च्चिषे अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यंगु शिवो भव । नृपदे वेड् सुप्षदे वेड् वहिषदे वेड् वनसदे वेड् स्वाविदे वेड् ये देवा देवानां यज्ञिया यज्ञियानां सम्बत्सरीणममुपभ गमासते । अहुतादो हविषो यज्ञे अस्मिन् स्वयं

पिवन्तु मधुना घृतस्य । ये देवा देवेष्वधिदेवत्वमायन्येव ब्रह्मणः पुर एतारो अस्य येभ्यो न ऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधिस्नुषु । प्राणदा अपानदा व्यानदा वर्च्चोदा वरिवोदाः अन्यांस्ते अस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यंगु शिवो भव । पुनः शुद्धोदकेन संस्नाप्य वस्त्रेण संप्रोक्ष्य सिन्दूरचन्दनादिभिरलंकृत्य वस्त्रेण आच्छाद्य पूजनं कुर्यात् । हस्ते पुष्पं गृहीत्वा वास्तुदेवं ध्यायेत्- अरुणितमणिवर्णं कुण्डलं श्रेष्ठकर्णं सुसितसुभगसौम्यं दण्डपाणिं सुरेशम् । निखिलजननिवासं विश्वबीजस्वरूपं नतजनभयनाशं वास्तुराजं भजामि ॥ ॐ आगच्छ भगवन् वास्तो सर्वदेवैरधिष्ठित । भगवन् कुरु कल्याणं यज्ञेऽस्मिन् सन्निधो भव ॥ भगवन् देवदेवेश ब्रह्मादि देवतात्मक । तव पूजां करिष्यामि प्रसाद कुरु मे सदा ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशोऽ अनमीवो भवानः । यस्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे । ॐ वास्तुदेवताभ्यो नमः वास्तुदेवानावाहयामि वास्तुदेवताः अत्रागच्छत । आवाहनादिकं विधाय प्राणान् प्रतिष्ठाप्य ॐ वास्तुपुरुषाय विद्महे भूमिपुत्राय धीमहि तन्नो देवः प्रचोदयात् । ॐ वास्तोष्पतेति मन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः वास्तोष्पतिर्देवता वास्तुपूजने विनियोगः । ॐ वास्तोष्पते अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ प्रतिजानीह्यस्मान् तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ स्वावेशो अनमीवो भवानः मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ यत्वे महे अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ प्रतितन्नो जुषस्व कनिष्ठाभ्यां वौषट् / नेत्रत्रयाय वौषट् । ॐ शं नो भव द्विपदे शं

चतुष्पदे करतलकरपृष्ठाभ्यां फट् / अस्त्राय फत् । ध्यानम्- शशधरसमवर्णं रत्नहारोज्ज्वलांगं कनकमुकुटचूडं स्वर्णयज्ञोपवीतम् । अभयवरदहस्तं सर्वलोकैकनाथं सकलभुवनरूपं वास्तुराजं भजामि ॥ ततः षोडशोपचारपूजा । अर्चनीयपुष्पम्-उपचारार्थमनुज्ञां याचेऽहं वास्तुदेवताः । गृह्णन्तु विविधान् भोगान् कुर्वन्तु मम मंगलम् ॥ आसनम्- सुन्दरं मण्डलं शुद्धं पञ्चरंगेन रञ्जितम् । आसनं च मयादत्तं गृह्णन्तु वास्तुदेवताः ॥ स्वागतम्- भो भो शिख्यादिकाः सर्वे नविनासु धरासु च । स्वागतं व्याहरिष्यामि गृह्णन्तु भूमिदेवताः ॥ पाद्यम्- गंगाजलं सितं स्वच्छमानीतं परमेश्वराः । पादान् प्रक्षालयिष्यामि सुप्रीताः सन्तु मे सदा ॥ अर्घ्यम्- चन्दनकर्पूरोपेतं जाह्नवीतोयमिश्रितम् । अर्घ्यं शुद्धं मया दत्तं स्वीकुरुथ धराधिपाः ॥ आचमनीयम्- जलं सुवासितं रम्यं लवंगसितामिश्रितम् । मुखप्रक्षालनार्थाय गृह्णन्तु वास्तुनायकाः ॥ स्नानम्- प्रयागादानीतं शुद्धं त्रिवेणीवारिशीतलम् । स्नानं चैव विधास्यामि कुर्वन्तु मम मंगलम् ॥ क्षीरस्नानम्- मधुरेण सुमिष्टेन गव्येन सम्भ्रमेण च । क्षीरेण शतधारेण स्नापयामि सुरेश्वराः ॥ दधिस्नानम्- सुपाच्येन सुगन्धेन शीतेन धवलेन च । दध्नाम्लेनातिशुद्धेन स्नापयामि भूमिश्वराः ॥ घृतस्नानम्- नवनीतात्समुत्पन्नं घृतं यत् बलमौषधम् । तेनाज्यबीर्यरूपेण स्नापयामि महीश्वराः ॥ मधुस्नानम्- लेह्यं च पेयमद्भूतं मिष्टदं मधुसुन्दरम् । तेन स्नानं विधास्यामि पूजयामि पदे

पदे ॥ शर्करास्नानम्- इक्षुरसाद् समुत्पन्नं मधुरं स्वादुशीतलम् । तया स्नानं विधास्यामि वास्तुदेवाः नमोनमः ॥ पञ्चामृतस्नानम्- दधिदुग्धसितानीतं मधुशर्करया युतम् । स्नानार्थं भो मया दत्तं दिव्यं पञ्चामृतं महत् ॥ महास्नानम्- कुशोदकेन सूक्तेन पौरुषेयेन एव च । महास्नानं विधास्यामि रौद्रेण वारुणेन च ॥ वस्त्रम्- वस्त्राणि तन्तुयुक्तानि तन्तुवायकृतानि च । तानि चित्रविचित्राणि मण्डयामि सीदन्तु भ ॥ उत्तरीयम्- उत्तरीयं महद्दिव्यं शोभनं गन्धसंयुतम् । तानि वः संप्रयच्छामि गृह्णन्तु भूमिपुंगवाः ॥ यज्ञोपवीतम्- त्रिगुणं च त्रिगन्थिकं नवसूत्रेण सज्जितम् । यज्ञसूत्रं प्रयच्छामि गृह्णन्तु धरणीसुराः ॥ गन्धः- श्रीखण्डं च मयानीतं कस्तूरीपरिमिश्रितम् । तेन दिव्येन पंकेन लेपयामि शिरे शिरे ॥ पुष्पम्- पद्मं च मालतीमल्लिपारिजातानि यानि च । जातिचम्पकपुष्पाणि गृह्णन्तु तानि सादरम् ॥ पत्राणि- दिव्यं च तुलसीपत्रं विल्वपत्रं तथैवच । शमीपत्राणि सर्वाणि प्रयच्छामि पुनः पुनः ॥ अलंकाराणि- वैडुर्यादीनि दिव्यानि अलंकाराणि यानि च । तानि वः संप्रयच्छामि गृह्णन्तु वास्तुदेवताः ॥ धूपः- नानासुगन्धचूर्णानि गुग्गुलमिश्रितानि च । धूपो वः संप्रयच्छामि वासं गृह्णन्तु भूचराः ॥ दीपः – गव्यमाज्येन शुद्धेन वर्तिवह्निना योजितम् । दीपावलोकनं चास्तु तमो नश्यन्तु मे सदा ॥ नैवेद्यम्- नानारसैः फलैः पक्वैः सुमिष्टैः

चव्यचोषितै । लेहैः पेयैः समायुक्तैः भोजनं प्रददामि भो ॥ पानीयम्- भोजनात्परतो नित्यं तृषायाः परिमार्जनम् । नारिकेलजलं मिष्टं पानीयं पानमस्तु वः ॥ ताम्बुलम्- लवंगं खादिरं चैव गुवाकं पानपत्रकम् । मिश्रितं ताम्बुलं दत्तं गृह्णन्तु असुरामराः ॥ आचमनम्- जलं सुवासितं रम्यं लवंगसितामिश्रितम् । आचमनं मया दत्तं गृह्णन्तु वास्तुदेवताः ॥ ऋतुफलम्- ननास्वादुसुपक्वानि मधुराणि फलानि च । मय्यर्पितानि सर्वाणि फलन्तु शुभमंगलम् ॥ दक्षिणा- नमो वः वास्तुदेवेभ्यः कुर्वन्तु मम मंगलम् । दास्यामि दक्षिणां चान्ते पूजा पूर्णास्तु मे सदा ॥ आरात्रिकम्- चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतिंषि आर्तिकं प्रतिगृह्यताम् । कदलीगर्भसम्भूतं कर्पूरन्तु प्रदीपितम् । आरार्त्तिकमहं कुर्वे पश्य मे वरदो भव ॥ ॐ इदं हविः प्रजननं मे अस्तु दशवीरँ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतोऽअस्मासु धत्त ॥ ॐ आ रात्रि पार्थिवगुं रजः पितुरप्रायि धामभिः । दिवः सदागुंसि बृहती वितिष्ठस आत्वेषं वर्तते तमः ॥ प्रदक्षिणम्- यानि कानि च पापानि जन्मजन्मान्तराणि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणं करोमि भो ॥ वास्तुपुष्पाञ्जलिः- १- शिखिने- शिखी त्वं शिवरूपोऽसि शूलखट्वांगधृक् सदा । वृषारूढ विरुपाक्ष गृहाण कुसुमाञ्जलिम् ॥ शिखिने पुष्पाञ्जलिं समर्पयामि । एवमेकैकं दद्यात् । २- पर्जन्याय- यादसां नाथ पर्जन्यः पाशहस्तो

वरप्रदः । कुम्भीररथमारूढ गृहाण कुसुमाञ्जलिम् ॥ ३- जयन्ताय- महेन्द्रतनयो देवो मुद्रिकाकंकणैर्युतः । वराभयकरो देव गृहाण कुसुमाञ्जलिम् ॥ ४- कुलिशायुधाय- ऐरावतगजारूढो वज्रपाणिसुरारिहा । देवराजसुराध्यक्षो गृहाण कुसुमाञ्जलिम् ॥ ५- सूर्याय- नभोमणे लोकसाक्षिन् दिनेश तग्मकान्तिधृक् । पद्महस्तो महाबाहो गृहाण कुसुमाञ्जलिम् ॥ ६- सत्याय –सत्यपुण्यमयो देवो दानधर्मो दयाप्रदः । चतुर्वगप्रदसत्य गृहाण कुसुमाञ्जलिम् ॥ ७- भृशाय – भुवनत्रयसंचारिन् आदिदेवमयो भृशः । वराभयकरो देव गृहाण कुसुमाञ्जलिम् ॥ ८- आकाशाय –देवयक्षग्रहाणां त्वमभयो वरदप्रदः । अशेषानन्ताकाशस्त्वं गृहाण कुसुमाञ्जलिम् ॥ ९- वायवे- धूम्रवर्णो महाबाहुः लोकानां प्राणधारकः । मृगारूढो महावीर गृहाण कुसुमाञ्जलिम् ॥ १०- पुष्णे- तडित् वर्णो महाबाहुः पद्मपाणिः वरप्रदः । रक्ताम्बरधरो पुषन् गृहाण कुसुमाञ्जलिम् ॥ ११- वितथाय- दिव्यान्तरिक्षधरणीसंचारिन् बलमोदवान् । पुराघहारी वितथ गृहाण कुसुमाञ्जलिम् ॥ १२- गृहक्षताय – सर्वोपद्रवसंहारी सर्वस्वस्तिकरो महान् । गृहक्षतस्त्वं मद्दत्तं गृहाण कुसुमाञ्जलिम् ॥ १३- यमाय- अंजनाद्रिसमोपेतो दण्डमुद्गरधारी च । महिषारूढो धर्मस्त्वं गृहाण कुसुमाञ्जलिम् ॥ १४-गन्धर्वाय - सुगन्धसुमनामोदी वीणावादनतत्परः । अप्सरसेव्यो गन्धर्व गृहाण

कुसुमाञ्जलिम् ॥ १५- भृंगराजाय- सततं कुसुमामोदी सेव्यमानश्च षट्पदैः । भृंगराजो महाकाय गृहाण कुसुमाञ्जलिम् ॥ १६- मृगाय - अरुणः सितवर्णश्च श्वेतोदरः चतुष्पदः । शृंगायुधः कुरंगस्त्वं गृहाण कुसुमाञ्जलिम् ॥ १७- पितृभ्यः- श्वेताम्बरः श्वेतवपुः सोमपा पितृकोऽर्यमन् । दण्डकमण्डलुपाणे गृहाण कुसुमाञ्जलिम् ॥ १८- दौवारिकाय – दौवारिको महाकायो निलयागर्भरक्षकः । बलिप्रियो मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ १९- सुग्रीवाय- वानराध्यक्षः सुग्रीवः महाकायो महाबलः । वृक्षपाषाणपाणेस्त्वं गृहाण कुसुमाञ्जलिम् ॥ २०- पुष्पदन्ताय- लम्बोदरो विघ्नराजो नागयज्ञोपवीतकः । चतुर्भुजो गजास्यस्त्वं गृहाण कुसुमाञ्जलिम् ॥ २१- वरुणाय- जलेश्वरो महाबाहुः पाशहस्तो महाबलः । यादसां नाथो वरुण गृहाण कुसुमाञ्जलिम् ॥ २२- असुराय- रक्षगणावृतः शक्तिः शूलपाणिर्महाबलः । महाकायो महावीरो गृहाण कुसुमाञ्जलिम् ॥ २३- शोषाय- रक्ताम्बरधरो देवः शिरसि विन्दुभूषितः । वराभयकरः शोषः गृहाण कुसुमाञ्जलिम् ॥ २४- पापाय- नीलाम्बरधरो देवः पापपूर्वाघनाशनः । चतुर्भुजो जगत्व्यापिन् गृहाण कुसुमाञ्जलिम् ॥ २५- रोगाय- उष्मप्रहरणो देवो वातादि त्रिगुणात्मकः । त्रिपादः त्रिशिरो रोग गृहाण कुसुमाञ्जलिम् ॥ २६- अहये- फणामस्तकसंयुक्तो भुजंगेशो

द्विजिह्वधृक् । स्वर्णवर्णो नागराज गृहाण कुसुमाञ्जलिम् ॥ २७-मुख्याय- जटाजूटधरो देवो गणानां मुख्यनायकः । शूलपट्टिशधृक् मुख्य गृहाण कुसुमाञ्जलिम् ॥ २८- भल्लाटाय- भल्लाटको महादेवः चापवाणासिधारकः । शिखिपुच्छधरः कृष्ण गृहाण कुसुमाञ्जलिम् ॥ २९-सोमाय- रोहिणीवल्लभो देवः क्षीराब्धितनयो विभुः । सुधीवरो निशानाथ गृहाण कुसुमाञ्जलिम् ॥ ३०-सर्पाय-विचित्रचित्रवर्णाढ्यो विषाक्तोरगनायकः । सर्पराजो महाकाय गृहाण कुसुमाञ्जलिम् ॥ ३१- अदित्यै-द्विभुजाब्जकरादेवी कश्यपस्य प्रमोदिनी । देवमाता अदिति त्वं गृहाण कुसुमाञ्जलिम् ॥ ३२-दित्यै- दैत्यमाता च शुभ्रांगी शूलपट्टिशधारिणी । रक्ताक्षी द्विभुजा देवि गृहाण कुसुमाञ्जलिम् ॥ ३३- अद्भ्यः- शुभ्राः पवित्राः विमलाः शिवाः सर्वामिलापहाः । प्राणरूपाः सदाऽऽपो मे गृहाण कुसुमाञ्जलिम् ॥ ३४-सावित्राय- सौरो महाबलो दीप्तः सावित्रो जननायकः । तेजसां नायकः श्रीमन् गृहाण कुसुमाञ्जलिम् ॥ ३५-जयाय- जयस्त्वं कुरु मे भद्रं जगन्मंगलकारकः । इन्द्रजयो मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ३६-रुद्राय-कर्पूरफेनसंकाशः उमादेहार्धमण्डितः । गंगाधरो वृषारूढ गृहाण कुसुमाञ्जलिम् ॥ ३७-अर्यम्णे- अर्यमन् सर्वलोकेशः सर्वमंगलकारकः । भक्त्या मयार्पितो देव गृहाण कुसुमाञ्जलिम् ॥ ३८-सवित्रे- सर्वकल्याणदः

सप्तवाजिवाहनतत्परः । संज्ञानाथो मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ३९- विवस्वते- चक्रायुधधरो देवः त्रिगुणात्मकसिद्धिदः । विवस्वते मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ४०- विबुधाधिपाय- ऐरावतारूढः श्रीमान् सर्वकल्याणकारकः । विबुधाधिपते देव गृहाण कुसुमाञ्जलिम् ॥ ४१- मित्राय- रत्नाम्बरधरो देवः ध्वजपाणिर्महाबलः । सर्वमोहनमित्र त्वं गृहाण कुसुमाञ्जलिम् ॥ ४२- राजयक्ष्मणे- धनुर्बाणसमायुक्तो यज्ञकर्मो वरप्रदः । द्विभुजो राजयक्ष्मा त्वं गृहाण कुसुमाञ्जलिम् ॥ ४३-पृथ्वीधराय- पुष्पवत् धरणीधारी सर्वस्वस्तिकरो महान् । समस्तजगदाधारो गृहाण कुसुमाञ्जलिम् ॥ ४४- आपवत्साय- कूर्मारूढः कुम्भहस्तः श्वेतवर्णो वरप्रदः । आपवत्सो मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ४५- ब्रह्मणे- सदा शुभ्रो विबुधेश आदिमूर्तिः सनातनः । हिरण्यगर्भो लोकेश गृहाण कुसुमाञ्जलिम् ॥ ४६-चरक्यै- चतुर्हस्ता महादेवी योगिनी वरदायिनी । भयेभ्यस्त्राहि मां नित्ये गृहाण कुसुमाञ्जलिम् ॥ ४७- विदार्यै- पिंगला लोमकेशाढ्या शूलकार्मुकधारिणी । विडालस्या विदारी त्वं गृहाण कुसुमाञ्जलिम् ॥ ४८- पूतनायै- पूतने त्वं हेमवर्णा राक्षसीगणसंयुता । घोररूपा विशालाक्षी गृहाण कुसुमाञ्जलिम् ॥ ४९-पापराक्षस्यै- धूम्रा वरांगी रक्तास्या राक्षसी पापपूर्विका । मयार्पितमिमं देवि गृहाण कुसुमाञ्जलिम् ॥ ५०- स्कन्दाय- मयूरवाहनः स्कन्दो रुद्रपुत्रो महाबलः । धनुर्बाणधरः श्रीमन् गृहाण

कुसुमाञ्जलिम् ॥ ५१-अर्यम्णे- महासौरो महावीरो वसुरूपः सनातनः । दिव्यतेजधरो देव गृहाण कुसुमाञ्जलिम् ॥ ५२-जृम्भकाय- जृम्भायमानो देवेशो वरखड्गधरः सदा । जृम्भकस्त्वं मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ५३-पिलिपिच्छाय-शिखिपृष्ठसमासीनो बाणकार्मुकधारी च । पिलिपिच्छ मया दत्तं गृहाण कुसुमाञ्जलिम् ॥ ५४-इन्द्राय- द्विभुजो देवराजश्च गजारूढः पुरन्दरः । इन्द्रः शचिपतिः श्रेष्ठः गृहाण कुसुमाञ्जलिम् ॥ ५५-अग्नये- जटिलो हेममालाढ्यः सप्तज्वालापरिवृतः । वीतिहोत्रो मयादत्तं गृहाण कुसुमाञ्जलिम् ॥ ५६- यमाय- नीलाञ्जनसमाभासः पाशदण्डधरः प्रभुः । महिषारूढः कृतान्तः गृहाण कुसुमाञ्जलिम् ॥ ५७- नैर्ऋताय- शवासनसमायुक्तो नैर्ऋतो नीलविग्रहः । वेतालनायकः श्रीमन् गृहाण कुसुमाञ्जलिम् ॥ ५८- वरुणाय-शुद्धस्फटिकसंकाशः पाशहस्तो वरप्रदः । वारुणीवल्लभो देव गृहाण कुसुमाञ्जलिम् ॥ ५९-वायवे- नीलाम्बरधरो वायुः चतुर्मेघसमन्वितः । मृगारूढो गदापाणे गृहाण कुसुमाञ्जलिम् ॥ ६०- कुवेराय-पुष्पकयानमारूढः पौलस्त्यो यक्षनायकः । स्वर्णवर्णो गदाहस्त गृहाण कुसुमाञ्जलिम् ॥ ६१- ईशानाय- शुद्धस्फटिकसंकाशो वृषारूढो महेश्वरः । शुलहस्तो विरूपाक्ष गृहाण कुसुमाञ्जलिम् ॥ ६२- ब्रह्मणे- अक्षमालासमायुक्तः कोटिसूर्यसमप्रभः ।

सावित्रीवल्लभो देव गृहाण कुसुमाञ्जलिम् ॥ ६३- अनन्ताय- शुक्लश्चतुर्भुजोऽनन्तः पालको भुवनाधिपः । कमलावल्लभो देव गृहाण कुसुमाञ्जलिम् ॥ ६४- अनन्तनागाय- अनन्तो नागराजेन्द्रो विष्णुमस्तकभूषणः । महाविषधरः श्रीमन् गृहाण कुसुमाञ्जलिम् ॥ ६५- वासुकये- वासुकिः वसुधाभाराधारको वासरक्षकः । महानीलो महाकाल गृहाण कुसुमाञ्जलिम् ॥ ६६- तक्षकाय- तक्षको भक्षणे व्यग्रो विषज्वालातिभीषणः । कोटिसूर्यसमाभास गृहाण कुसुमाञ्जलिम् ॥ ६७-कर्कोटकाय- कर्कोटकमहामूर्तिः कुन्देन्दुस्फटिकप्रभः । सवंशरक्ष मां नित्यं गृहाण कुसुमाञ्जलिम् ॥ ६८- शंखाय- शंखवत् धवलश्चारु मिष्टविषसमन्वितः । शंखचूडाकृताभास गृहाण कुसुमाञ्जलिम् ॥ ६९- कुलिकाय- चित्ररूपधरो देवः कुलिको वायुभक्षकः । कुलरक्षाकरः श्रीमन् गृहाण कुसुमाञ्जलिम् ॥ ७०- पद्माय- पद्मपुष्पप्रभो वीरः पद्मगन्धसमन्वितः । पद्मनाग सदा त्वं हि गृहाण कुसुमाञ्जलिम् ॥ ७१- महापद्माय- महाकायो महासर्पो महापद्मसुभूषितः । पद्मवने स्थितो नित्यं गृहाण कुसुमाञ्जलिम् ॥ ७२- दुर्जयायै- चतुर्हस्ता त्रिनेत्रा च दुर्जया दूरतिक्रमा । महामेघमयी देवि गृहाण कुसुमाञ्जलिम् ॥ ७३- विकटायै- महाकोपकरी धूम्रा योगिनी परमेश्वरी । विकटा कलहा दृप्ता गृहाण कुसुमाञ्जलिम् ॥ ७४- घोरायै- मुण्डमालाधरा रौद्री घोररूपा महियसी । मालतीचर्च्चिता

घोरे गृहाण कुसुमाञ्जलिम् ॥ ७५- भीषणायै- भीषणचौरव्याघ्रादि शत्रुतापविखण्डिनी । भीषणे पाहि मां नित्यं गृहाण कुसुमाञ्जलिम् ॥ ७६- भयानक्यै- भयानक्यै नमस्तुभ्यं क्रूरभूतविमर्दिनी । भयाद् रक्षस्व मां देवि गृहाण कुसुमाञ्जलिम् ॥ ७७- यमदंष्ट्रायै- दंष्ट्राकरालनयना यमद्वारनिवासिनी । श्यामले रक्तनेत्रा त्वं गृहाण कुसुमाञ्जलिम् ॥ ७८- कालजिह्वायै- महाजिह्वा महामाया कुरूपा च भयंकरी । महापापहरी देवि गृहाण कुसुमाञ्जलिम् ॥ ७९- क्रोशिन्यै- चतुर्भुजा महागौरी शूलासिशंखधारिणी । वरदे क्रोशिनी माये गृहाण कुसुमाञ्जलिम् ॥ ८०-ताडिन्यै- कर्कशा च महाभीमा सदा ताडनतत्परा । ताडिनी पातु वो नित्ये गृहाण कुसुमाञ्जलिम् ॥ ८१- वास्तुपुरुषाय- उत्तानपुरुषो मर्मी प्राकशिरस्तु द्विजिह्वकः । निकुब्जो धरणीसुप्त गृहाण कुसुमाञ्जलिम् ॥ वास्तुबलिः - सात्त्विकैः राजसैश्चव तामसैर्बलिमोदकैः । पायसैः पिष्टकैर्मांसैः तृप्यन्तु भोसुरामराः ॥ स्वनामचतुर्थ्यन्तेन एकैकं पलाशपत्रेण पायसबलिं दद्यात् । तद्यथा- ॐ शिखिने पायसबलिं समर्पयामि ।१। एवं सर्वत्र योज्यः । पर्जन्याय ।२। जयन्ताय ।३। कुलिशायुधाय ।४। सूर्याय ।५। सत्याय ।६। भृशाय ।७। आकाशाय ।८। अग्नये ।९। पूष्णे ।१०। वितथाय ।११। गृहक्षताय ।१२। यमाय ।१३। गन्धर्वाय ।१४। भृंगराजाय ।१५। मृगाय ।१६। पितृभ्यः ।१७। दौवारिकाय ।१८। सुग्रीवाय ।१९। पुष्पदन्ताय ।२०। वरुणाय ।२१। असुराय ।२२। शोषाय ।२३। पापयक्ष्मणे ।२४। रोगाय ।२५। अहिर्वृध्नाय

।२६। मुख्याय ।२७।भल्लाटाय ।२८। सोमाय ।२९। सर्पाय ।३०। अदित्यै ।३१। दित्यै ।३२। अद्भ्यः ।३३। सावित्राय ।३४। जयाय ।३५। रुद्राय ।३६।अर्यम्णे ।३७। सवित्रे ।३८। विवस्वते ।३९। विवुधाधिपाय ।४०।मित्राय ।४१। राजयक्ष्मणे ।४२। पृथ्वीधराय ।४३। आपवत्साय ।४४। ब्रह्मणे ।४५। चरक्यै ।४६। विदार्यै ।४७। पूतनायै ।४८। पापराक्षस्यै ।४९। स्कन्दाय ।५०। अर्यम्णे ।५१। जृम्भकाय ।५२। पिलिपिच्छाय ।५३। इन्द्राय ।५४। अग्नये ।५५। यमाय ।५६। नैर्ऋताय ।५७। वरुणाय ।५८। वायवे ।५९। कुवेराय ।६०। ईशानाय ।६१। ब्रह्मणे ।६२। अनन्ताय ।६३। अनन्तनागाय ।६४। वासुकये ।६५। तक्षकाय ।६६। कर्कोटकाय ।६७। शंखाय ।६८। कुलिकाय ।६९। पद्माय ।७०। महापद्माय ।७१। दुर्जयायै ।७२। विकटायै ।७३। घोरायै ।७४। भीषणायै ।७५। भयानक्यै ।७६। यमदंष्ट्रायै ।७७। कालजिह्वायै ।७८। क्रोशिन्यै ।७९। ताडिन्यै ।८०। वास्तुपुरुषाय ।८१। ततः वास्तु अर्घ्यम्- वास्तोष्पते त्वमुतिष्ठ संसारस्थितिकारकः । त्वं मां पालय सर्वत्र गृहाणार्घ्यं नमोऽस्तुते ॥ अनेन मन्त्रेण भूमौ क्षीरधारां दद्यात् । प्रार्थना- पूजितोऽसि मया वास्तोः होमादैरर्च्चनैः शुभैः । प्रसीद पाहि विश्वेश देहि मे परमं सुखम् ॥ नमस्ते वास्तुपुरुष भूशय्याभिरत प्रभो । मद्गृहं धनधान्यादि समृद्धं कुरु मे सदा ॥ सशैलसागरापृथ्वी यथा वहसि मूर्ध्वनि । तथा मां वह कल्याण सम्पत्सन्ततिभिः सह ॥ वास्तुपुरुष देवेश सर्वविघ्नविदारण । शान्तिं कुरु सुखं देहि यज्ञेऽस्मिन् मम सर्वदा ॥ देवदेवगणाध्यक्षं पातालतलवासिम् । शान्तिकर्तारमीशानं तं वास्तुं प्रणमाम्यऽहम् ॥ विश्वकर्मा पूजा-

हस्ते पुष्पं तुलसीदलं गृहीत्वा श्रीविश्वकर्माणं ध्यायेत् – भास्कर्यामृतलेपितं निजमुखं शोभाकलाधारितं हस्तिपृष्ठगतं चतुर्भुजधरं संशोभितं यन्त्रितम् । ज्योतिःशास्त्रधुरन्धरं सुगणकं शिल्पध्वजाधारिणं वास्तुज्ञानधरं भजे प्रतिदिनं श्रीविश्वकर्मप्रभुम् ॥ ॐ विश्वकर्मणे नमः । आवाहनादिकं विधाय ॐ शिल्पाचार्याय विद्महे विश्वकर्मणे धीमहि तन्नः शिल्पी प्रचोदयात् । ॐ विश्वकर्मन्नित्यस्य मन्त्रस्य नारदऋषिः दैवीगायत्रीच्छन्दः श्रीविश्वकर्मा देवता अर्चने विनियोगः । ॐ विश्वकर्मन् हविषा बर्धनेन अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ त्रातारमिन्द्र तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ मकृणोरवध्यं मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ तस्मै विशः अनामिकाभ्यां हुं / कवचाय हुम् । ॐ समनमन्तपूर्वि कनिष्टाभ्यां वौषट् / नेत्रत्रयाय वौषट् । ॐ रयमुग्रो विहव्यो यथासत् करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानं- नमस्ते विश्वरूपाय विश्वपूज्याय ते नमः । नमो विश्वात्मभूताय विश्वकर्मन् नमोऽस्तुते ॥ मन्त्रः- ॐ विश्वकर्मन् हविषा बर्धनेन त्रातारमिन्द्र मकृणोरवध्यं तस्मै विशः समनमन्तपूर्वि रयमुग्रो विहव्यो यथासत् । अनेन मन्त्रेण पूजयित्वा स्तुतिं कुर्यात्- महिमण्डलमण्डितचित्रकरं सुरमानवसेवितयन्त्रिवरं पुरमन्दिरसुन्दरकारुकरं भज सत्यसनातनशिल्पिवरम् ॥ विधिसर्जितसर्जनकर्मकरं गुरुगौरववर्धनलास्यधरं सुषमाभरितामृतधरं भज सत्यसनातनशिल्पिवरम् ॥ ॐ

श्रीविश्वकर्मणे नमः पुष्पाञ्जलिं समर्पयामि । खनित्री( करणी )पूजा- ॐ विष्णुर्योनि कल्पयतु त्वष्टा रूपाणि विंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं ददातु ते ॥ ॐ खनिताय लौहदण्डाय नमः । गन्धादिभिः पूजयित्वा स्तुतिं कुर्यात्- त्वष्ट्रा त्वं निर्मितं पूर्वं लोकानां हितकाम्यया । पूजिताऽसि खनित्रि त्वं सिद्धिदा भव नो ध्रुवम् ॥ धरित्री पूजा- हस्ते पुष्पं गृहीत्वा पृथिवीं ध्यायेत्- स्वर्णागर्भां धरित्रीं कनकमयनिभां श्यामलां शस्यपूर्णां गोलाकारां चलन्तीमरुणपरिवृतां वृक्षगुल्मादियुक्ताम् । नित्यानित्यस्वरूपां नदनदीपूरितां गन्धयुक्तां प्रसन्नां तां दिव्यां स्थूलपृथ्वीं त्रिभुवनजननीं मातृभूमिं स्मरामि ॥ ॐ ह्रीं श्रीं वां वसुधायै नमः । आवाहनादिकं विधाय ॐ धनुर्धरायै विद्महे शूलहस्तायै धीमहि तन्नः पृथ्वीः प्रचोदयात् । ॐ वसुधामन्त्रस्य कश्यपऋषिः त्रिष्टुप् छन्दः भूमिर्देवता भूमिपूजने विनियोगः । ॐ अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां स्वाहा । ॐ श्रीं मध्यमाभ्यां वषट् । ॐ वां अनामिकाभ्यां हुम् । ॐ वसुधायै कनिष्ठाभ्यां वौषट् । ॐ नमः करतलकरपृष्ठाभ्यां फट् । एवमंगन्यासः अस्त्राय फडिति विशेषः । ध्यानम्- श्वेतचम्पकवर्णाभां शरच्चन्द्रसमप्रभाम् । चन्दनोक्षितसर्वांगीं सर्वाभरणभूषिताम् ॥ रत्नाधारां रत्नगर्भां रत्नाकरसमन्विताम् । वह्निशुद्धां शुकाधानां सस्मितां कलितां भजे ॥ इति संप्रार्थ्य यथोपचारैः पूजयेत् । अर्घ्यंदानम्- पृथिवी यानि सत्त्वानि स्थावराणि चराणि च । पाताले यानि सत्त्वानि पन्नगाश्चैव राक्षसाः । ददाम्यर्घ्यं प्रगृह्णन्तु वास्तु गृह्णाम्यऽहं पुनः ॥ ॐ

वास्तोस्पतये ब्रह्मणे एषोऽर्घ्यं स्वाहा । ॐ वसुधे हेमगर्भासि शेषस्योपरिशायिनि । तवपृष्ठे पूजाकर्तुं गृहाणार्घ्यं धरित्रि मे ॥ ॐ पृथिव्यै एषोऽर्घ्यं स्वाहा । ॐ सर्वलक्षणसंपन्ने सर्वेश कमठाकृते । स्थानं देहि पूजाकर्तुं विष्णुरूपि नमोऽस्तुते ॥ ॐ कूर्माय एषोऽर्घ्यं स्वाहा । ॐ हिमकुन्दमृणालाभ नागानन्त महाफणिन् । स्थानं देहि पूजाकर्तुं गृहाणार्घ्यं नमोऽस्तुते ॥ ॐ अनन्ताय एषोऽर्घ्यं स्वाहा ।

पुष्पाञ्जलिः- अरुणकमलसंस्थां शूलहस्तां वरेण्यामभयवरदमुद्रां धारितां श्यामलांगीम् । असुरसुरनराद्यैः पूजनीयां वरिष्ठां त्रिभुवनजनकाम्यामुत्कलं प्रार्थयामि ॥ कूर्मपृष्ठोपरिस्थां च शुक्लवर्णां चतुर्भुजाम् । शंखचक्रधरां चक्रशूलयुक्तां सदा भजे ॥ सर्वबीजसमायुक्ता सर्वरत्नोघसंयुता । पूजिता परमाचार्यैः गन्धमाल्यविभूषिता ॥ ईष्टकामं प्रयच्छ त्वं त्वामहं शरणागतः । पुत्रदारधनायुष्यं धनवृद्धिकरी भव ॥ अष्टदलपद्मे

**महालक्ष्मीपूजनम्**- हस्ते पद्मपुष्पं गृहीत्वा श्रीमहालक्ष्मीं ध्यायेत्- आवाहये तां मुहुरन्नपूर्णां विष्णुप्रियां ब्रह्मसनातनीं ताम् । वामांगशोभां कमलासनस्थां तां राजसीं नित्यमहं भजामि ॥ ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः । इत्यावाह्य प्राणान् प्रतिष्ठाप्य ॐ पद्मवासिन्यै विद्महे हरिप्रियायै धीमहि तन्नो लक्ष्मीः प्रचोदयात् । त्रिपठित्वा ॐ महालक्ष्मीमन्त्रस्य भृगुऋषिः निवृत् छन्दः श्रीर्देवता श्रीमहालक्ष्मीपूजने विनियोगः। ॐ श्रीं ह्रीं श्रीं अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ कमले तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ कमलालये मध्यमाभ्यां वषट् / शिखायै

वषट् । ॐ प्रसीद प्रसीद अनामिकाभ्यां हुम् / कवचाय हुं । ॐ श्रीं ह्रीं श्रीं कनिष्ठाभ्यां वौषट् / नेत्रत्रयाय वौषट् । ॐ महालक्ष्मै नमः करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम्-रं रं रं रक्तपद्मासनकलितमहावैष्णवीं हेमवर्णां वैकुण्ठे विष्णुलोके तरलितललनां चंचलाक्षीं द्विनेत्राम् । शंखं चक्रं च पद्मं मुसलवरकरां रत्नताटंकयुक्तां तां देवीं देवदेवीं त्रिभुवनजननीं राजलक्ष्मीं नमामि ॥ यथोपचारैः पूजयेत् । पुष्पांजलिः-जयतु जयतु लक्ष्मीः लक्षणालंकृतांगी जयतु जयतु पद्मा पद्मसद्माभिवन्द्या । जयतु जयतु विद्या विष्णुवामांकसंस्था जयतु जयतु सम्यक् सर्वसंपत्करीश्रीः ॥ **पञ्चशिलापूजनम्-** १-नन्दा-आवाहयाम्यहं नन्दामानन्दातिकां सुव्रताम् । गृहार्थं पूजयिष्यामि तस्मात्त्वं वरदा भव ॥ ॐ नन्दस्य मा रुधतः काम आमन्त्रित आजतो अमृतः कुतश्चित् । लोपामुद्रा दृषणं नी रिणाति धीरमधीरा धयति श्वसन्तम् ॥ ॐ नन्दायै नमः । आवाहनादिकं विधाय पञ्चोपचारैः पूजयित्वा स्तुतिं कुर्यात्- नन्दा त्वं नन्दिनी पुंसा त्वामत्र स्थापयाम्यहम् । अस्मिन् रक्षा त्वया कार्या प्रासादे यत्नतो मया ॥ २- भद्रा-अहमावाहयिष्यामि भद्रां त्वां परदेवताम् । इष्टिकारूपेण अत्र सदा हि सुस्थिरा भव ॥ ॐ भद्रा ते हस्ता सुकृतोत पाणि प्रयन्तारा स्तुवते राध इन्द्र काते निपतिः किमु नो ममात्सि किं मेदुदु हर्षते दातवाउ । ॐ भद्रायै नमः । आवाहनादिकं विधाय पञ्चोपचारैः पूजयित्वा स्तुतिं कुर्यात्-भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि । आयुर्दा कामदा देवि सुखदा च

सदा भव ॥ ३-जया- अहमावाहयिष्यामि जयां त्वां जयकारिणीम् । अस्मिन् गृहे सदा त्वं हि जयदा कामदा भव ॥ ॐ जयतं च प्रसूतं च प्रचावतं प्रजा च धत्तं द्रविणं च धत्तम् । सजोषसा उपसा सूर्येण चोदना धत्तमश्विना । ॐ जयायै नमः । आवाहनादिकं विधाय पञ्चोपचारैः पूजयित्वा स्तुतिं कुर्यात्- जये त्वं सर्वदा देवि तिष्ठ त्वं स्थापिता मया । नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि ॥ ४-रिक्ता- अहमावाहिष्यामि रिक्तां देवीं यशस्विनीम् । सुमनां कुरु मे देवि गृहे कल्याणि रम्यताम् ॥ ॐ रिक्ताय स्वाहा अतिरिक्ताय स्वाहा परिक्ताय स्वाहा संरिक्ताय स्वाहा द्रिक्ताय स्वाहा सर्वस्मै स्वाहा । ॐ रिक्तायै नमः । आवाहनादिकं विधाय पञ्चोपचारैः पूजयित्वा स्तुतिं कुर्यात्- रिक्ते त्वरिते दोषघ्ने सिद्धिवुद्धिप्रदे शुभे । सर्वदा सर्वदोषघ्ने तिष्ठाऽस्मिन् मम मन्दिरे ॥ ५- पूर्णा- आवाहयामि तां पूर्णां पूर्णकामप्रदायिनी । पूर्णतामस्तु मे कार्यं पूर्णेश्वरीं नमाम्यऽहम् ॥ ॐ पूर्णा पश्चादूत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधिसंवसन्त उत्तमे नाक इह मादयन्ताम् । ॐ पूर्णायै नमः । आवाहनादिकं विधाय पञ्चोपचारैः पूजयित्वा स्तुतिं कुर्यात्- पूर्णे त्वं सर्वदा भद्रे सर्वसन्दोहलक्षणे । सर्वं संपूर्णमेवास्तु धनदा सुतदा भव ॥ महाध्वजपूजा – हस्ते पुष्पं गृहीत्वा ध्वजं ध्यायेत् अहमावाहयिष्यामि ध्वजं च रक्तवर्णकम् । महामण्डपमध्ये त्व स्थापयामि सुरार्च्चने ॥ ॐ पताति कुण्डूणाच्या दूरं वातो वनादधि । आतुन इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।

ॐ महाध्वजाय नमः । आवाहनादिकं विधाय ॐ दण्डयुक्ताय विद्महे रक्तवर्णाय धीमहि तन्नो ध्वजः प्रचोदयात् । ॐ महाध्वजमन्त्रस्य शुनःशेफ ऋषिः पंक्ति छन्दः इन्द्रो देवता महाध्वजपूजने विनियगः । ॐ पताति कुण्डूणाच्या अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ दूरं वातो वनादधि तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ आतुन इन्द्र मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ शंसय गोष्वश्वेषु अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ शुभ्रिषु सहस्रेषु कनिष्ठाभ्यां वौषट् । नेत्रत्रयाय वौषट् । ॐ तुवीमघ करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम्- सुदण्डमण्डायितरक्तवर्णमोंकाररूपोज्ज्वलचारुहास्यम् । उड्डीयमानं सुरसौरभाख्यं वन्दे ध्वजं किन्नरदैवतं तम् ॥ गन्धादिभिः पूजयित्वा प्रार्थयेत्-महाध्वजो महाकायो वांशदण्डेन मण्डितः । नादविन्दुसमायुक्तं गृहाण कुसुमाञ्जलिम् ॥ ततः महाध्वजं ईशानदिक्भागे भूमौ निखाय मृत्तिकाभिः गर्तं पूरयित्वा ॐ सुप्रतिष्ठितो भव , चिरकालं स्थिरो भव , सर्वसौख्यप्रदो भव इत्युचार्य- ॐ यावत् चन्द्रश्च सूर्यश्च तावदत्र स्थिरो भव । दुरितं दुष्टसत्त्वानि भूतादीनि धूनोतु च ॥ **नवग्रहस्थापनम्-** ॐ जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोऽरिं सर्वपापघ्नं सूर्यमावाहयाम्यहम् ॥ ॐ सूर्यमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ दिव्यशंखतुषाराभं क्षीरोदार्णवसम्भवम् । ज्योत्स्नापतिं निशानाथं चन्द्रमावाहयाम्यहम् ॥ ॐ चन्द्रमहाग्रहाय

नमः । आवाहयामि स्थापयामि । ॐ धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं च मंगलमाह्वयाम्यहम् ॥ ॐ मंगलमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधम् । सौम्यं सौम्यगुणोपेतं बुधमावाहयाम्यहम् ॥ ॐ बुधमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम् । वन्द्यभूतं त्रिलोकेशं गुरुमावाहयाम्यहम् ॥ ॐ बृहस्पतिमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं शुक्रमावाहयाम्यहम् ॥ ॐ शुक्रमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ नीलांजनसमाभासं रविपुत्रं यमाग्रजम् । छायामार्तण्डसम्भूतं शनिमावाहयाम्यहम् ॥ ॐ शनैश्चरमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ मलयाचलसंजातमर्धकायं महासुरम् । सिंहिकागर्भसम्भूतं राहुमावाहयाम्यहम् ॥ ॐ राहुमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं घोरं केतुमावाहयाम्यहम् ॥ ॐ केतुमहाग्रहाय नमः । आवाहयामि स्थापयामि । ॐ आकृष्णेनेत्यस्य मन्त्रस्य हिरण्यस्तुप् ऋषिः त्रिष्टुप् छन्दः श्रीनवग्रहाः देवताः नवग्रहाणां पूजने विनियोगः । ॐ आकृष्णेन रजसा वर्तमानः अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ निवेशयन् तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ अमृतं मर्त्त्यं च मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ हिरण्ययेन अनामिकाभ्यां हुम् / कवचाय हुम् । ॐ सविता

रथेना कनिष्ठाभ्यां वौषट् / नेत्राभ्यां वौषट् । ॐ देवोयाति भुवनानि पश्यन् करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् - सूरः सुरपदं रुचिं हिमरुचिः सन्मंगलं मंगलो वोधं बोधनमातनोतु ललितावाचश्च वाचस्पतिः । काव्यं काव्यकलां कलापतिरतिं मन्दो द्विषन्मन्दतां दुर्वृत्तेषु तमस्तमो जयकरी केतुश्च केतुस्त्रियम् ॥ ॐ नवग्रहेभ्यो नमः । आवाहनादिकं विधाय प्राणान् प्रतिष्ठाप्य ॐ दिवाकराय विद्महे प्रभाकराय धीमहि तन्नः सूर्यः प्रचोदयात् । ॐ निशाकराय विद्महे क्षपाकराय धीमहि तन्नः चन्द्र प्रचोदयात् । ॐ अंगारकाय विद्महे भूमिपुत्राय धीमहि तन्नो भौमः प्रचोदयात् । ॐ रोहिणेयाय विद्महे विधुसुताय धीमहि तन्नो बुधः प्रचोदयात् । ॐ आंगिरसाय विद्महे सुराचार्याय धीमहि तन्नो जीवः प्रचोदयात् । ॐ औशनसाय विद्महे भृगुपुत्राय धीमहि तन्नो शुक्रः प्रचोदयात् । ॐ शनैश्चराय विद्महे सूर्यपुत्राय धीमहि तन्नः सौरी प्रचोदयात् । ॐ विधुन्तुदाय विद्महे सैंहिकेयाय धीमहि तन्नो राहुः प्रचोदयात् । ॐ धूम्रासनाय विद्महे धूम्रवर्णाय धीमहि तन्नः केतुः प्रचोदयात् । आसनादिनैवेद्यान्तं पूजयेत् । पुष्पाञ्जलिः- ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुशशिभूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकराः भवन्तु ॥ गात्रं रक्षतु भास्करः शुभकरो गोत्रं कलाधारकः नेत्रं भौममहाबलो वुधवरः शास्त्रं महापण्डितः । पात्रं जीवमहागुरुः भृगुसुतः पुत्रं कलत्रं शनिः छत्रं राहुतमः शिखी बलधरः शस्त्रं महामंगलम् ॥ **दिग्पालस्थापनम्**- ॐ वज्रहस्तं सुरश्रेष्ठं सहस्राक्षं शचीप्रियम् । स्वर्णवर्णं

गजारूढमिन्द्रमावाह्यामयहम् ॥ ॐ इन्द्राय नमः । आवाहयामि स्थापयामि । अरुणं श्मश्रुकेशाढ्यं सप्तार्चिं मेषवाहनम् । स्वाहास्वधायुतं देवमग्निं मावाहयाम्यहम् ॥ ॐ अग्नये नमः । दण्डपाशधरं कृष्णं कालं महिषवाहनम् । प्रेताधिपं महाभीमं यममावाहयाम्यहम् ॥ ॐ यमाय नमः । आवाहयाम्यहं देवं निर्ऋतिं शववाहनम् । खड्गचर्मधरं रौद्रं कौणपं नीलविग्रहम् ॥ ॐ नैर्ऋताय नमः । स्वर्णवर्णं जलाधीशं पाशहस्तं प्रचेतसम् । कुम्भीररथमारूढं वरुणमाह्वयाम्यहम् ॥ ॐ वरुणाय नमः । धूम्रवर्णं मृगारूढं ध्वजहस्तं समीरणम् । आशुगं प्राणदं देवं वायुमावाहयाम्यहम् ॥ॐ वायवे नमः । स्वर्णवर्णं धनाधीशं कुवेरमलकास्थितम् । पुष्पकरथमारूढं यक्षमावाहयाम्यहम् ॥ ॐ कुवेराय नमः । शुद्धस्फटिकसंकाशं शूलहस्तं सुरेश्वरम् । गौरांगं वृषभारूढं ईशमावाहयाम्यहम् ॥ ॐ ईशानाय नमः । अक्षमालाधरं देवं सावित्रीप्रियवल्लभम् । पद्महस्तं चतुर्मुखं ब्रह्माणमाह्वयाम्यहम् ॥ ॐ ब्रह्मणे नमः । अनन्तं सहस्रशीर्षं विष्णुमस्तकभूषणम् । कृष्णवर्णं महाकायं नागमावाहयाम्यहम् ॥ ॐ अनन्ताय नमः । ॐ इन्द्रादिदशदिग्पालेभ्यो नमः । आवाहनादिकं संपाद्य प्राणान् प्रतिष्ठाप्य ॐ वज्रहस्ताय विद्महे सुराधिपाय धीमहि तन्नः इन्द्रः प्रचोदयात् । ॐ वैश्वानराय विद्महे विरुपाक्षाय धीमहि तन्नो वह्निः प्रचोदयात् । ॐ पाशहस्ताय विद्महे नीलवर्णाय धीमहि तन्नो यमः प्रचोदयात् । ॐ प्रेतासनाय विद्महे खड्गहस्ताय धीमहि तन्नो नैर्ऋतः प्रचोदयात् । ॐ जलेशाय विद्महे कुम्भीरवाहनाय धीमहि तन्नो वरुणः प्रचोदयात् ॐ धूम्रवर्णाय विद्महे ध्वजहस्ताय धीमहि तन्नो वायुः प्रचोदयात् । ॐ यक्षेश्वराय विद्महे वैश्रवणाय धीमहि

तन्नः कुवेरः प्रचोदयात् । ॐ वृषारूढाय विद्महे शूलहस्ताय धीमहि तन्नः ईशः प्रचोदयात् । ॐ वेदात्मने विद्महे सावित्रीनाथाय धीमहि तन्नो ब्रह्मा प्रचोदयात् । ॐ सहस्रशीर्षाय विद्महे कूर्मारूढाय धीमहि तन्नोऽनन्तः प्रचोदयात् । दिक्पानानां प्राणाः सुप्रतिषिताः भवन्तु । ॐ त्रातारमिन्द्रमित्यस्य मन्त्रस्य गर्ग ऋषिः त्रिष्टुप् छन्दः इन्द्रादयो देवता दिक्पालानां पूजने विनियोगः । त्रात्रारमिन्द्रेति मन्त्रेण पंचोपचारैः पूजयित्वा स्तुतिं कुर्यात्- सूत्रामाकलिताशनिःस्रुवकर्श्चाग्निर्यमो दण्डभृत् खड्गी नैर्ऋतदिक्पतिश्च वरुणः पाशी ध्वजांकोऽनिलः । यक्षेशश्च गदाकरपरशुभृत् भर्गोऽक्षसूत्री च तु वक्त्रोऽनन्ततनुः सिताम्बुजकरः तेभ्योऽमरेभ्यो नमः ॥ इन्द्रादयः सुराः सर्वे सर्वालंकारभूषिताः । अभीष्टफलदाः शान्ताः दिग्पालाः पान्तु ते सदा ॥ हवनम् - भूमिसंस्कारार्थं पञ्चभूसंस्कारं कुर्यात् । दक्षिणादुत्तरतः कुशत्रयं , गोमयं , वज्रं तदभावे कुशत्रयं , पुनः कुशत्रयं उदकपात्रमित्यासाद्य प्रथमकुशत्रयेण परिसमूह्य३ । गोमयोदकेन उपलिप्य३ । वज्रेण वा वज्रार्थकुशत्रयेण उल्लिख्य३ । अपरकुशत्रयेण अनामिकांगुष्ठाभ्यामुधृत्य३ । जलेन अभुक्ष्य३ । प्रोक्षणी जलेनाग्निं रं बीजेन प्रोक्ष्य ऐं कवचाय हुमिति मन्त्रेण योनिमुद्रां प्रदर्श्य कवचाय हुमिति कवचमन्त्रेण कुण्डोपरि भ्रामयित्वा ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् । ॐ एषोह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जात स उ गर्भे अन्तः स एव जातः स जनिष्यमाणः प्रत्यङ्

जनास्तिष्ठति सर्वतोमुखः । अनेनाग्निं सम्मुखीकरणम् । हस्ते रक्तपुष्पं गृहीत्वा अग्निं ध्यायेत् – सर्वलक्षणसंपूर्णं जटामुकुटमण्डितम् । शुद्धचामिकराभासं स्मेरास्यं मधुराधरम् ॥ पीताम्बरपरिधानं दिव्याभरणभूषितम् । चन्दनागुरुकर्पूरैश्चर्चितं स्रग् विभूषितम् ॥ सितपद्मासनं शान्तं मेषारूढं सुरोत्तमम् । सोपवीतजटामौलिमुज्ज्वलं हारकंकणैः ॥ चतुःश्रोत्रं द्विनासं च षड्नेत्रैश्च विराजितम् । सपहस्तं चतुःशृंगं सप्तजिह्वं द्विशीर्षकम् ॥ त्रिपादमखिलानां च सर्वकामार्थसिद्धिदम् । स्वाहा तु दक्षिणा पार्श्वे वामभागे स्वधा तथा ॥ विभ्रतं दक्षहस्ते तु शक्तिमन्नं स्रुवं स्रुचम् । तोमरं व्यजनं वामे घृतपात्रं च विभ्रतम् । आत्माभिमुखमासीनमेव ध्यायेत् हुताशनम् ॥ ॐ भगवन् अग्नये नमः आवाहयामि । आवाहनादिकं विधाय प्राणान् प्रतिष्ठाप्य ॐ वैश्वानराय विद्महे विरुपाक्षाय धीमहि तन्नो वह्निः प्रचोदयात् । अग्निपञ्चाक्षर मन्त्रस्य कौत्सविरुपाक्ष ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता रं वीजं स्वाहा शक्तिः दधीचिगोत्रं घृतकल्लोलप्रवरं अग्निपूजने विनियोगः । ॐ अं अंगुष्ठाभ्यां नमः / हृदयाय नमः । ॐ ग्नं तर्जनीभ्यां स्वाहा / शिरसे स्वाहा । ॐ यें मध्यमाभ्यां वषट् / शिखायै वषट् । ॐ नं अनामिकाभ्यां हुं / कवचाय हुम् । ॐ मं कनिष्ठाभ्यां वौषट् / नेत्रत्रयाय वौषट् । ॐ अग्नये नमः करतलकरपृष्ठाभ्यां फट् / अस्त्राय फट् । ध्यानम् – ध्यायेत् वैष्णवमेव तं हुतवहं प्रांशुं प्रचण्डप्रभं विद्युत्पिंगसटं द्विशीर्षममलं पिंगेग्रषड् लोचनम् । नासाभ्यां हुतहव्यकव्यमरुणैः शृंगैश्चतुर्भिर्युतं श्रोत्रैश्चापि चतुर्भिरुग्रदशनं

ज्योतिर्विलिढाधरम् ॥ न्यासः- ॐ आं नमः मूर्ध्नि ॐ ईं नमः आस्ये ॐ ऊं नमः गुदे ॐ ॠं नमः कट्यां ॐ ऐं नमः पादयोः ॐ औं नमः वाहुमूले । **कुशाण्डिविधिः** – दक्षिणतो ब्रह्मासनम् । उत्तरे प्रणीताप्रणयनम् । प्राच्यादि चतुर्दिक्षु कुशैः परिस्तरणम् । पूर्वे उत्तराग्रम् । दक्षिणे पूर्वाग्रम् । पश्चिमे उत्तराग्रम् । उत्तरे पूर्वाग्रम् । एवं क्रमेण पात्रासादनम् । दक्षिणतः उत्तरसंस्थम् । पवित्रच्छेदनानि कुशत्रय ब्रह्मग्रन्थियुतानि । पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । चरुस्थाली । समार्जनकुशाः । उपयमनकुशाः । तिस्रः समिधः । श्रुवः । आज्यम् । पूर्णपात्रार्थतण्डुलाः । नवशक्तिकापरिमिता स्वर्णदक्षिणा वरोर्वा । एतान् आसादनान्तरं पवित्रच्छेदनोपरि पवित्रे दत्वा प्रदक्षिणं वेष्टयित्वा नखवर्जं पवित्रच्छेदनं कृत्वा प्रोक्षण्युपरि पवित्रे स्थापयित्वा प्रणीताजलेन प्रोक्षणीं पूरयित्वा दक्षिणस्य अंगुष्ठानामिकाभ्यां भ्रामयित्वा उद्दिंगनम् । तां सव्यहस्ते कृत्वा पवित्राभ्यामुत्पवनम् । तज्जलेन आसादितपात्राणां प्रोक्षणम् । अग्निर्प्रणीतयोर्मध्ये असंचरे प्रोक्षणीनिधानम् । आज्यस्थाल्यामाज्यनिर्वापः । आज्याधिश्रयणमग्नौ । ज्वलत्काष्ठेन आज्यस्य पर्यग्नीकरणम् । उदकस्पर्शनम् । श्रुवप्रतपनम् । समार्जनकुशैः श्रुवसमार्जनम् । मूलेन मूलम् । मध्येन मध्यम् । अग्रेणाग्रम् । प्रणीतोदकेन श्रुवाभ्युक्षणम् । पुनः श्रुवप्रतपनम् । अधोमुखतया भूमौ निधानम् । आज्योद्वासनम् । पवित्राभ्यामाज्योत्पवनम् । प्रोक्षण्युत्पवनम् । आज्यावेक्षणम् । प्रोक्षण्यवेक्षणम् । आज्ये श्रुवनियोजनम् । उपयमनकुशानादाय

वामहस्ते गृहीत्वा उत्तिष्ठन् समिधमग्नौ तूष्णीं क्षिपेत् समिधाग्निदुवस्यतेति मन्त्रेण वा । प्रोक्षणीजलं सपवित्रं गृहीत्वा अग्नेःईशानकोणादारभ्य तदन्तं पर्युक्षणं कुर्यात् । प्रणीतायां पवित्रनिधानम् । दक्षिणजानौ भूमौ निपात्य ब्रह्मान्वारब्धहोमः कर्त्तव्यः । आघारवाज्यभागौ जुहुयात् । ॐ प्रजापतये स्वाहा इदं प्रजापतये पूर्वाघारः । ॐ इन्द्राय स्वाहा इदमिन्द्राय दक्षिणाघारः । ॐ अग्नये स्वाहा इदमग्नये । ॐ सोमाय स्वाहा इदं सोमाय । पुण्याहवाचनम् । **रक्षाकरणम्** – ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां गरुडध्वजः । वराहो दक्षिणे पातु नारसिंहस्तु नैर्ऋते ॥ वारुण्यां केशवो रक्षेत् वायव्यां मधुसूदनः । उत्तरे श्रीधरः पातु ऐशान्यां पातु वामनः ॥ ऊर्ध्वं गोवर्धनो रक्षेत् अधस्ताने च केशवः । एवं दशदिशो रक्षेत् वासुदेवो जगद्गुरुः ॥ यज्ञस्य पुरतः शंखं पृष्ठे च सरसीरुहः । वामपार्श्वे गदा रक्षेत् दक्षिणे च सुदर्शनः ॥ रक्षेदुपेन्द्र आचार्यं ब्रह्माणं पातु वामनः । ऋग्वेदमच्युतो रक्षेत् यजुर्वेदमधोक्षजः ॥ सामकृष्णस्तथा रक्षेदथर्वाणं तु वामनः । यजमानं सपत्नीकं पुण्डरीकाक्ष रक्षतु ॥ उपविष्टास्तु ये विप्रास्तान् वै रक्षतु शंकरः । रक्षाहीनं तु यत्सर्वं तत्सर्वं त्रायतां हरिः । रक्षां विना तु यो यज्ञः स एव निष्फलो भवेत् ॥ ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो वलगहनो वस्तृणामि वैष्णवान् रक्षोहणौ वां वलगहना उपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवा स्थ । अनेन मन्त्रेण श्वेतसर्षपान् विकीर्य रक्षाकरणं कुर्यात् । **सप्तजिह्वाहोमः** > ध्यानम् – षड् नेत्रं सप्तहस्तं त्रिपदमपिचतुः

शृंगकर्णं द्विशीर्षं रक्ताब्जस्थं द्विनासं वृषगतमरुणं वाहुभिस्तैश्चतुर्भिः । दक्षे शक्तिं श्रुवं च स्रुचमपिकलशं तोमरं तालवृन्तं सर्पिःपात्रं च वामे दधतमविरतं चिन्तये सप्तजिह्वम् ॥ सप्तजिह्वाभ्यः ध्यानपुष्पं समर्पयामि । ॐ ह्रीं श्रीं हुं सुराधिदैवतायै कनकवर्णायै हिरण्यायै स्वाहा इदं हिरण्यायै न मम । ॐ ह्रीं श्रीं भ्रूं पित्राधिदैवतायै वैदुर्यवर्णायै कनकायै स्वाहा इदं कनकायै न मम । ॐ ह्रीं श्रीं जूं गन्धर्वाधिदैवतायै अरुणवर्णायै रक्तायै स्वाहा इदं रक्तायै न मम । ॐ ह्रीं श्रीं यूं राक्षसाधिदैवतायै इन्द्रनीलवर्णायै सुकृष्णायै स्वाहा इदं सुकृष्णायै न मम । ॐ ह्रीं श्रीं हूं नागाधिदैवतायै श्वेतवर्णायै सुप्रभायै स्वाहा इदं सुप्रभायै न मम । ॐ ह्रीं श्रीं पूं पिशाचाधिदैवतायै जवाप्रभायै अतिरिक्तायै स्वाहा इदमतिरिक्तायै न मम । ॐ ह्रीं श्रीं सूं यक्षाधिदैवतायै बहुरूपवर्णायै बहुरूपायै स्वाहा इदं बहुरूपायै न मम । सप्तजिह्वाः सन्तुष्टाः भवत

**अंगदेवताहोमः** > ध्यानम्- स्वाहाशक्तिसुवर्णवर्णममलं स्रग्गन्धनालं कृतं ज्वालापुंगजटाकलापविशिखो मौलिस्फुरत्कंकणम् । स्वस्तिस्वस्तिकदर्भमुष्टिकजपं स्रीणां सचार्भिवरैः दोर्भिर्वाञ्छितमुञ्चतां त्रिनयनं रक्ताक्षमग्निं भजे ॥ अंगदेवेभ्यो ध्यानपुष्पं समर्पयामि । ॐ सहस्रार्च्चिषे स्वाहा इदं सहस्रार्च्चिषे न मम । एवं सर्वत्र वोध्यः । ॐ स्वस्तिपूर्णाय , उत्तिष्ठपुरुषाय , धूम्रव्यापिने , सप्तजिह्वाय , धनुर्धराय , वेदमुख्याय । अंगदेवताः सन्तुष्टाः भवत । **मूर्त्तिहोमः**> ध्यानम् – सुदीप्तं काञ्चनाभं जटामुकुटशिखं यज्ञगर्भं सुगर्भं पाणौ दण्डादि वैद्यं दधतमभयदं

मेषयानासनस्थम् । इन्द्राद्याः लोकपाला ग्रहगणविवुधैर्वन्दितं सर्वभक्षं स्वाहार्धं सप्तजिह्वं क्रतुहविरसनां चिन्तये अग्निदेवम् ॥ मूर्त्तिदेवेभ्यो ध्यानपुष्पं समर्पयामि । ॐ जातवेदसे , सप्तजिह्वाय , हव्यवाहनाय , अश्वोदराय , वैश्वानराय , कौमारतेजसे , विश्वमुख्याय , वेदमुख्याय । मूर्त्तिदेवताः सन्तुष्टाः भवत । नवशक्तिहोमः> ध्यानम् – अग्निं जवारुणतनुं धृतशक्तिहेति छागोपरिस्थितमुदारसुवर्णमालम् । ज्वालाकपालपविशकृतसर्वगात्रं संचिन्तयेदखिलसिद्धिविधानपात्रम् ॥ नवशक्तिभ्यो ध्यानपुष्पं समर्पयामि । ॐ पीतायै , श्वेतायै , अरुणायै , कृष्णायै , धूम्रायै , तीव्रायै , स्फुलिंगिन्यै , रुचिरायै , ज्वालिन्यै । नवशक्तयः सन्तुष्टाः भवत । वैश्वानरहोमः > ध्यानम् – हे वैश्वानर गन्धचन्दनयुतं कस्तूरीमोदांकितं सीताब्जासनकुन्दकैरवादीनां मालामल्लिकादिभिः । गुग्गुल्यादिवनस्पतिरसयुतं कर्पूरमोदांकितं नैवेद्यान्ते निवेदयामि भो गुरो गृह्णन्तु मां सादरम् ॥ वैश्वानराय ध्यानपुष्पं समर्पयामि । ॐ रं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इदं वैश्वानराय न मम । अनेन मन्त्रेण त्रिवारं जुहुयात् । दशसंस्कारहोमः > ध्यानम् - हेमाभं च त्रिपादं हयशिरसमपि सप्तहस्तं च जिह्वां श्रोत्रं वेदं चतुरं त्रिगुणमपि तथा शृंग चत्वारि धार्यम् । छन्दं व्याहृतिमन्त्रैर्हविकविसहिता होतृब्रह्मा च तुष्टं नानालंकारयुक्तं श्रुवश्रुचसहितं चिन्तयेत् हव्यवाहम् ॥ ॐ अग्नेः गर्भाधानसंपादनाय मारुतनामाग्नये स्वाहा ।१। ॐ अग्नेः

पुंसवनसंपादनाय चन्द्रनामाग्नये स्वाहा ।२। ॐ अग्नेः सीमन्तोनयनसंपादनाय मंगलनामाग्नये स्वाहा ।३। ॐ अग्नेः नामकरणसंपादनाय पार्थिवनामाग्नये स्वाहा ।४। ॐ अग्नेः जातकर्मसंपादनाय प्रगल्भनामाग्नये स्वाहा ।५।ॐ अग्नेः अन्नप्राशनसंपादनाय शुचिनामाग्नये स्वाहा ।६। ॐ अग्नेः चुडाकर्मसंपादनाय सभ्यनामाग्नये स्वाहा ।७। ॐ अग्नेः उपनयनकर्मसंपादनाय समुद्भवनामाग्नये स्वाहा ।८। ॐ अग्नेः समावर्तनकर्मसंपादनाय सूर्यनामाग्नये स्वाहा ।९। ॐ अग्नेः विवाहकर्मसंपादनाय योजकनामाग्नये स्वाहा । १०। **व्याहृतिहोमः-**
मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रिक्षणैः
युक्तामिन्दुकलानिवद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयांकुशकशां शुभ्रं कपालं गुणं शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ । ॐ ऋग्वेदाय नमः । ॐ यजुर्वेदाय नमः । ॐ सामवेदाय नमः । ॐ अथर्ववेदाय नमः । एभिर्मन्त्रैः स्रुवेण स्रुचि चतुराज्यग्रहणम् । ॐ महाव्याहृतीनां प्रजापति ऋषिः गायत्री छन्दः अग्निर्देवता व्याहृतिहोमे विनियोगः । ॐ भूः स्वाहा इदमग्नये न मम । तद्वत् चतुराज्यं गृहीत्वा ॐ व्याहृतीनां प्रजापति ऋषिः उष्णिक् छन्दः वायुर्देवता व्याहृतिहोमे विनियोगः । ॐ भुवः स्वाहा इदं वायवे न मम । पुनः ॐ व्याहृतीनां प्रजापति ऋषिः अनुष्टुप् छन्दः सूर्यो देवता व्याहृतिहोमे विनियोगः । ॐ स्वः स्वाहा इदं सूर्याय न मम । पुनः ॐ व्याहृतीनां प्रजापति ऋषिः गायत्री उष्णिक् अनुष्टुप् छन्दांसि अग्निवायुसूर्याः देवताः समस्तव्याहृतिहोमे विनियोगः । ॐ भूर्भुवःस्वः स्वाहा इदमग्निवायुसूर्येभ्यो न मम ।

प्रायश्चितहोमः -ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्निनतमःशोशुचानो विश्वा द्वेषांगुसि प्रमुमुग्धस्मत् स्वाहा इदमग्निवरुणाभ्याम् । ॐ सत्वन्नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसोव्युष्टौ अवयक्षूनो वरुणंगु रराणो व्रीहि मृडिकंगु सुहवो न एधि स्वाहा इदमग्निवरुणाभ्याम् । ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्व मया असि अयानो यज्ञं वहास्यया नोधेहि भेषजंगु स्वाहा इदमग्नये । ॐ ये ते शतं वरुण ये सहस्रं यज्ञिया पाशा वितता महान्तः तेभिर्नो अद्य सवितोः विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च । ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमंगु श्रथाय अथावयमादित्यव्रते तवानागसो अदितये साम स्वाहा इदं वरुणाय । ॐ प्रजापतये स्वाहा इदं प्रजापतये । ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । विनायकहोमः – हस्ते पुष्पं गृहीत्वा विनायकं स्मरेत् – शिवानन्दानन्दो गलितमकरन्दमुखकिरः महाज्ञानी बुद्धो गजवदनरुद्रो गणधरः । महामायापुत्रः प्रमथपतिसेवा पटुतमः गणाध्यक्षः स्वामी नयनपथगामी भवतु मे ॥ ध्यानपुष्पं दत्वा ॐ गणानां त्वा गणपतिंगु हवामहे प्रियाणां त्वा प्रियपतुंगु हवामहे निधीनां त्वा निधिपतिंगु हवामहे वसो मम आहमजानि गर्भधं मा त्वमजासि गर्भधम् । अनेन मन्त्रेण त्रिराहुतिं दद्यात् । ततः वास्तुहोमः- ( विल्वहोमः ) ॐ वास्तोष्पते प्रतिजानी ह्यस्मान् स्वावेशो अनमीवो भवानः । यत्त्वे महे प्रतितन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे । स्वाहा इदं वास्तोष्पतये न मम । ॐ

वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दोः । अजरासस्ते सख्ये स्याम पितेव पुत्रान्  प्रतितन्नो जुषस्व । स्वाहा इदं वास्तोष्पतये न मम ।  ॐ वस्तोष्पते शग्मया संसदाते सक्षीम हिरण्मया गातुमत्या । पाहि क्षेम उत योगे वरं नो युयं पातु स्वस्तिभिः सदा नः । स्वाहा इदं वास्तोष्पतये न मम । ॐ अमीवहा वास्तोष्पते विश्वारूपाण्याविशन्  सखा सुशेव एधि नः ।  स्वाहा इदं वास्तोष्पतये न मम । ॐ वास्तोष्पते ध्रुवास्थूणां सत्रं सोम्यानां द्रप्सो भेत्ता पुरां शाश्वतीनां भिक्षे इन्द्रो मुनीनां सखा । स्वाहा इदं वास्तोष्पतये न मम । एभिः पञ्चभिः मन्त्रैः पञ्चविल्वं जुहुयात् । ततः एकाशीतिदेवानां होमः- - ॐ शिखिने स्वाहा इदं शिखिने न मम ।१। एवं सर्वत्र योज्यः । पर्जन्याय ।२। जयन्ताय ।३। कुलिशायुधाय ।४। सूर्याय ।५। सत्याय ।६। भृशाय ।७। आकाशाय ।८। अग्नये ।९। पृष्णे ।१०। वितथाय ।११। गृहक्षताय ।१२। यमाय ।१३। गन्धर्वाय ।१४। भृंगराजाय ।१५। मृगाय ।१६। पितृभ्यः ।१७। दौवारिकाय ।१८। सुग्रीवाय ।१९। पुष्पदन्ताय ।२०। वरुणाय ।२१। असुराय ।२२। शोषाय ।२३। पापयक्ष्णणे ।२४। रोगाय ।२५। अहिर्वृध्नाय ।२६। मुख्याय ।२७।भल्लाटाय ।२८। सोमाय ।२९। सर्पाय ।३०। अदित्यै ।३१। दित्यै ।३२। अद्भ्यः ।३३। सावित्राय ।३४। जयाय ।३५। रुद्राय ।३६।अर्यम्णे ।३७। सवित्रे ।३८। विवस्वते ।३९। विवुधाधिपाय ।४०।मित्राय ।४१। राजयक्ष्मणे ।४२। पृथ्वीधराय ।४३। आपवत्साय ।४४। ब्रह्मणे ।४५। चरक्यै ।४६। विदार्यै ।४७। पूतनायै ।४८। पापराक्षस्यै ।४९। स्कन्दाय ।५०। अर्यम्णे ।५१। जृम्भकाय ।५२। पिलिपिच्छाय ।५३।

इन्द्राय ।५४। अग्नये ।५५। यमाय ।५६। नैर्ऋताय ।५७। वरुणाय ।५८। वायवे ।५९। कुवेराय ।६०। ईशानाय ।६१। ब्रह्मणे ।६२। अनन्ताय ।६३। अनन्तनागाय ।६४। वासुकये ।६५। तक्षकाय ।६६। कर्कोटकाय ।६७। शंखाय ।६८। कुलिकाय ।६९। पद्माय ।७०। महापद्माय ।७१। दुर्जयायै ।७२। विकटायै ।७३। घोरायै ।७४। भीषणायै ।७५। भयानक्यै ।७६। यमदंष्ट्रायै ।७७। कालजिह्वायै ।७८। क्रोशिन्यै ।७९। ताडिन्यै ।८०। वास्तुपुरुषाय ।८१। **विश्वकर्मा होमः**- ॐ विश्वकर्मन् हविषा बर्धनेन त्रातारमिन्द्र मकृणोरवध्यं तस्मै विशः समनमन्तपूर्वि रयमुग्रो विहव्यो यथासत् । स्वाहा इदं विश्वकर्मणे न मम । अष्टाविंशति जुहुयात् । **पञ्चशिलाहोमः**- ॐ नन्दायै स्वाहा । ॐ भद्रायै स्वाहा । ॐ जयायै स्वाहा । ॐ रिक्तायै स्वाहा । ॐ पूर्णायै स्वाहा । **नवग्रहहोमः –** नवग्रहाणां समिधः-अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः । औदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमात् ॥ ॐ नवग्रहहोममन्त्रस्य हिरण्यकश्यप ऋषिः त्रिष्टुप् छन्दः नवग्रहाः देवताः साधिदैवत प्रत्यधिदैवतसहित नवग्रहाणां होमकर्मणि विनियोगः । ध्यानम्- गात्रं रक्षतु भास्करः शुभकरो गोत्रं कलाधारकः नेत्रं भौममहाबलो वुधवरः शास्त्रं महापण्डितः । पात्रं जीवमहागुरुः भृगुसुतः पुत्रं कलत्रं शनिः छत्रं राहुतमः शिखी बलधरः शस्त्रं महामंगलम् ॥ ॐ कपिलनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्च्य ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।

स्वाहा इदं रविमहाग्रहाय न मम । ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं उर्वारुकमिववन्धनान्मृत्योर्मुक्षीय मामृतात् । स्वाहा इदं त्र्यम्बकाय रविमहाग्रहस्याधिदैवताय । ॐ अग्निदूतं पुरो दधे हव्यवाहमुप ब्रुवे देवाँ२ आ सादयादिह । स्वाहा इदमग्नये रविमहाग्रहस्य प्रत्यधिदैवताय । ॐ पिंगलनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्येष्ठाय महते जानराज्याय इन्द्रस्य इन्द्रियाय इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एषवोऽमी राजा सोमोऽस्माकं ब्राह्मणानांगु राजा स्वाहा । इदं चन्द्रमहाग्रहाय न मम । ॐ श्रीश्चते लक्ष्मीश्च पत्व्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् इष्णनिषाणामुम्मयिषाण सर्वलोकं मइषाण । स्वाहा इदं श्रियै चन्द्रमहाग्रहस्याधिदैवतायै । ॐ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान् वाजसास्तेनायं वाजंगु सेत् । स्वाहा इदमद्भ्यः चन्द्रमहाग्रहस्य प्रत्यधिदैवताभ्यः । ॐ धूम्रनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ अग्नि मूर्द्धादिवः ककुत्पति पृथिव्या अयं अपांगु रेतांगुसि जिन्वति । स्वाहा इदं मंगलमहाग्रहाय न मम । ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहु उपस्तुत्यं महि जातं ते अर्वन् । स्वाहा इदं स्कन्दाय मंगलमहाग्रहस्याधिदैवताय । ॐ स्येना पृथिवी नो भवा नृक्षरा निवेशनी यच्छानः शर्म सप्रथाः । स्वाहा इदं पृथिव्यै मंगलमहाग्रहस्य प्रत्यधिदैवतायै । ॐ जठरनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ उद्वुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सं सृजेथामयं च अस्मिन्त्सधस्ते अध्युत्तरस्मिन् विश्वे देवा यजमानश्च

सीदत । स्वाहा इदं वुधमहाग्रहाय न मम । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांगु सुरे । स्वाहा इदं विष्णवे वुधमहाग्रहस्याधिदैवताय । ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः अतो धर्माणि धारयन् । स्वाहा इदं नारायणाय वुधमहाग्रहस्य प्रत्यधिदैवताय । ॐ शिखिनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ बृहस्पते अति यदर्यो अर्हात् द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । स्वाहा इदं बृहस्पतिमहाग्रहाय न मम । ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् । स्वाहा इदं ब्रह्मणे बृहस्पतिमहाग्रहस्याधिदैवताय । ॐ त्रात्रारमिन्द्रमवितारमिन्द्रंगु हवे हवेसु हवंगु शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहुतमिन्द्रंगु स्वस्ति नो मघवा धात्विन्द्रः । स्वाहा इदमिन्द्राय बृहस्पतिमहाग्रहस्य प्रत्यधिदैवताय । ॐ हाटकनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोम प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु । स्वाहा इदं शुक्रमहाग्रहाय न मम । ॐ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिव वृत्रहा शूर विद्वान् जहि शत्रूं रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः । स्वाहा इदमिन्द्राय शुक्रमहाग्रहस्याधिदैवताय । ॐ इन्द्राणी मासु नारीषु सुपत्नी महमश्रवम् न ह्यस्या अपरञ्चन जरसा मरते पतिः । स्वाहा इदमिन्द्राण्यै शुक्रमहाग्रहस्य प्रत्यधिदैवतायै । ॐ महातेजोनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शं योरभि स्रवन्तु नः । स्वाहा इदं शनैश्चरमहाग्रहाय

न मम । ॐ यमेन दत्तं त्रितयेनमायुनगिन्द्र एणं प्रथमोऽध्यतिष्ठत् गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतिष्ठ। स्वाहा इदं यमाय शनिमहाग्रहस्याधिदैवताय । उदकस्पर्शनम् । ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयंगु स्याम पतयो रयीणांगु स्वाहा । स्वाहा इदं प्रजापतये शनैश्चरमहाग्रहस्य प्रत्यधिदैवताय । ॐ हुताशननामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ काण्डात्काण्डात्प्ररोहन्ति परुष परुषस्परि एवानो दूर्वे प्रतनु सहस्रेण शतेन च । स्वाहा इदं राहुमहाग्रहाय न मम । ॐ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि समापो अद्भिरग्मत समोषधीभिरोषधी । स्वाहा इदं कालाय राहुमहाग्रहस्याधिदैवताय । ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अन्तरीक्षे ये दिवि तेभ्यो सर्पेभ्यो नमः । स्वाहा इदं सर्पाय राहुमहाग्रहस्य प्रत्यधिदैवताय । उदकस्पर्शनम् । ॐ रौद्रनामाग्नये नमः इत्यावाह्य गन्धादिभिरभ्यर्च्य ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः । स्वाहा इदं केतुमहाग्रहाय न मम । ॐ चित्रावसोः स्वस्ति ते पारमशीय संत्वमग्ने सूर्यस्य वर्चसा गाथाः समृषीणांगु स्तुतेन । स्वाहा इदं चित्रगुप्ताय केतुमहाग्रहाणाम् अधिदैवताय । ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः । स्वाहा इदं ब्रह्मणे केतुमहाग्रहाणां प्रत्यधिदैवताय । गणानां त्वा गणपतिंगु हवामहे कविं कवीनामुपमश्रवस्तमं ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् नूतिभिसीदसादनम् । स्वाहा इदं गणेशाय न मम । ॐ दृंहस्व देवि पृथिवी स्वस्तय आसुरी माया स्वधया कृतासि जुष्टं देवेभ्यः इदमस्तु

हव्यम् अरिष्टात्वमुदेहि यज्ञेऽस्मिन् । स्वाहा इदं दुर्गायै न मम । ॐ वातोवा मनो वा गन्धर्वाः सप्तविंशतिः ते अग्रे अश्वमयुञ्जँस्ते अस्मिन् जवमादधु । स्वाहा इदं वायवे न मम । ॐ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये । स्वाहा इदमाकाशाय न मम ॐ विश्वा आशा दक्षिणसद्विश्वान् देवानयाडिह स्वाहाकृतस्य घर्मस्य मधोः पिबतमाश्विना । स्वाहा इदमश्विनीकुमाराभ्याम् न ।

**दिक्पालहोमः-** त्रात्रारमिन्द्रमवितारमिन्द्रंगु हवे हवेसु हवंगु शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहुतमिन्द्रंगु स्वस्ति नो मघवा धात्विन्द्रः । स्वाहा इदमिन्द्राय न मम । ॐ अग्निदूतं पुरो दधे हव्यवाहमुप ब्रुवे देवाँ२ आ सादयादिह । स्वाहा इदमग्नये न मम । ॐ यमेन दत्तं त्रितयेनमायुनगिन्द्र एणं प्रथमोऽध्यतिष्ठत् गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतिष्ठ । स्वाहा इदं यमाय न मम । ॐ एषते निर्ऋते भागस्तं जुषस्व स्वाहा अग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो वा मरुन्नेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यः उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यः उपरिसद्भ्योदुवस्वद्भ्यः स्वाहा । इदं नैर्ऋताय न मम । ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युरा चके । इदं वरुणाय न मम । ॐ वातो वा मनो वा गन्धर्वाः सप्तविंशतिः ते अग्रेऽश्वमयुंञ्जस्ते अस्मिञ्जवमा दधुः । इदं वायवे न मम । ॐ कुविदंग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय इहेहैषा कृणुहि भोजनानि ये बर्हिषो नम उक्तिं यजन्ति । इदं कुवेराय न मम । ॐ

तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये । इदमीशानाय न मम । ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् । इदं ब्रह्मणे न मम । ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । इदमनन्ताय न मम । पुरुषसूक्तहवनम् –ॐ सहस्रशीर्षेत्यादि पुरुषसूक्तस्य साध्यो नारायण ऋषिः अनुष्टुभादीनि छन्दांसि परमात्मजगद्बीजं पुरुषो देवता आपः शक्तिः श्रीनारायणप्रीतये हवने विनियोगः । ध्यानम् –ध्येयः सदा सवितृमण्डलमध्यवर्तिर्नारायणसरसिजासनसन्निविष्टः । केयूरवान्मकरकुण्डलवान्कीरिटिहारी हिरण्मयवपुः धृतशंखचक्रः॥ हरिः ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिगुं सर्वत स्पृत्वाऽत्यतिष्ठदशांगुलम् ॥१॥ स्वाहा इदं नारायणाय न मम । एवं सर्वत्र योज्यम् । ॐ पुरुष एवेदगुं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥ ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः । ततो विश्वङ् व्यक्रामत्सासनानशने अभि ॥४॥ ॐ ततो विराडजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥ तस्माद्यज्ञात्सर्वहुत सम्भृतं पृषदाज्यम् । पशुँस्ताँश्चक्रे बायव्यानारण्या ग्राम्याश्च ये ॥६॥ ॐ तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दागुंसि जज्ञिरे तस्माद् यजुः तस्मात् अजायत ॥७॥ ॐ तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे

तस्मात्तस्माज्जाता अजावयः ॥८॥ ॐ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥ ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥१०॥ ॐ ब्राह्मणोऽस्य मुखमासीत्बाहू राजन्यः कृतः । ऊरू तदस्य यद् वैश्यः पद्भ्यागुं शूद्रो अजायत ॥११॥ ॐ चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥ नाभ्या आसीदन्तरीक्षगुं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन् ॥१३॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरत् हविः ॥१४॥ ॐ सप्तस्यासन् परिधयस्त्रिः सप्त समिधः कृताः । देवा यत् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥१५॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥ ॐ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥ ॐ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१८॥ ॐ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते । तस्य योनिं परि पश्यन्ति धीराः तस्मिन् हतस्थुः भुवनानि विश्वा ॥१९॥ ॐ यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्बो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥ ॐ रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रूवन् । यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥२१॥ ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणा मु मइषाण सर्वलोकं म इषाण ॥२२॥ अनेन हवनेन नारायण

सन्तुष्टो भव । **श्रीसूक्तहवनम्-** ॐ हिरण्यवर्णामिति श्रीसूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरा ऋषयः अनुष्टुभादीनि छन्दांसि श्रीर्देवता महालक्ष्मीप्रीत्यर्थं हवने विनियोगः । ध्यानम् – या सा पद्मासनस्था विपुलकटितटि पद्मपत्रायताक्षी गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया । या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुम्भैः सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥ ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मआवह ॥१॥ स्वाहा इदं महालक्ष्म्यै न मम । ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥ चन्द्रां प्रभासा यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मनेमिं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽलक्ष्मीः ॥६॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यऽहम् । अभूतिमसमृद्धिं च सर्वान् निर्णुद मे गृहात् ॥८॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥ मनसः काममाकूतिं वाचःसत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥ कर्दमेन प्रजाभूता मयि सम्भव कर्दम । श्रियं

वासय मे कुले मातरं पद्ममालिनीम् ॥११॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासयमे कुले ॥१२॥ आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।सूर्य्यां हिरण्मयीं लक्ष्मीं  जातवेदो म आवह ॥१४॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥१६॥ पद्मानने पद्मऊरु पद्माक्षी पद्मसम्भवे । तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥१७॥ अश्वदायी गोदायी धनदायी महाधने । धनं मे जुषतां देवि सर्व कामांश्च देहि मे ॥१८॥ पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि । विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥१९॥ पुत्रं पौत्रं धनं धान्यं हस्त्यश्वादिगवेरथम् । प्रजानां भवसि माता आयुष्मन्तं करोतु मे ॥२०॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो वृहस्पतिर्वरुणं धनमश्विनौ ॥२१॥ वैनतेय सोमं पिव सोमं पिवतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥२२॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२३॥ सरसिजनिलये सरोजहस्ते धवलतरां शुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥२४॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥२५॥ महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि तन्नो लक्ष्मीः प्रचोदयात् ॥२६॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविदात् शोभमानं महीयते । धान्यं धनं

पशुं वहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२७॥ अनेन हवनेन महालक्ष्मि सन्तुष्टा भव ।